अथ आपस्तंब शाखांतर्गत हिरण्यकेशीयब्रह्मकर्मांची
अनुक्रमणिका प्रारंभः

विषय १५६.

## ॥ अथ हिरण्यकेशीयब्रह्मकर्मानुक्रमणिकाप्रारंभः ॥

विष.

॥ १ ॥



॥ १ ॥

## ॥ अथ प्रातःस्मरणप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ यस्यमाताउमादेवीपितायस्यतुशंकरः ॥ मूषकोवाहनंयस्यसमापातुविनायकः ॥ ॥ १ ॥ महर्षिर्भगवान्व्यासःकृत्वेमांसंहितांपुरा ॥ श्लोकैश्चतुर्भिर्धर्मात्मापुत्रमध्यापयच्छुकम् ॥ २ ॥ मातापितृसहस्राणिपुत्रदारशतानिच ॥ संसारेष्वनुभूतानियांतियास्यंतिचापरे ॥ ३ ॥ हर्षस्थानसहस्राणिभयस्थानशतानिच ॥ दिवसेदिवसेमूढमाविशांतिनपंडितम् ॥ ४ ॥ ऊर्ध्वबाहुर्विरौम्येषनचकश्चिच्छृणोतुमे ॥ धर्मादर्थश्चकामश्चसकिमर्थंनसेव्यते ॥ ५ ॥ नजातुकामान्नभयान्नलोभाद्धर्मंत्यजेज्जीवितस्यापिहेतोः ॥ धर्मोनित्यःसुखदुःखेत्वनित्येजीवोनित्योहेतुरस्यत्वनित्यः ॥ ६ ॥ इमांभारतसावित्रींप्रातरुत्थाययःपठेत् ॥ सभारतफलंप्राप्यपरंब्रह्माधिगच्छति ॥ ७ ॥ प्रातःस्मरामिखलुतत्सवितुर्वरेण्यंरूपंहिमंडलमृचोत्थतनुर्यजूंषि ॥ सामानियस्यकिरणाःप्रभवादिहेतुंब्रह्माहरात्मकमलक्ष्यमचिंत्यरूपम् ॥ १ ॥ प्रातर्नमामितरणिंतनुवाङ्मनोभिर्ब्रह्मेंद्रपूर्वकसुरैर्नुतमर्चितंच ॥ वृष्टिप्रमोचनविनिग्रहहेतुभूतंत्रैलोक्यपालनपरंत्रिगुणात्मकंच ॥ २ ॥ प्रातर्भजामिसवितारमनंतशक्तिंपापौघशत्रुभयरोगहरंपरंच ॥ तंसर्वलोककलनात्मककालमूर्तिंगोकंठबंधनविमोचनमादिदेवम् ॥ ३ ॥ श्लोकत्रयमिदंभानोःप्रातःप्रातःपठेत्तुयः ॥ ससर्वव्याधिनिर्मुक्तःपरंसुखमवाप्नुयात् ॥ ४ ॥ प्रातःस्मरामिगणनाथमनाथबंधुंसिंदूरपूरपरिशोभितगंडयुग्मम् ॥ उद्दंडवि

मपरिखंडणचंडदंडमाखंडलादिसुरनायकवृंदवंद्यम् ॥ १ ॥ प्रातर्नमामिचतुराननवंद्यमानमिष्टानुकूलमखि
लंचवरंददानम् ॥ तंतुंदिलंद्विरसनप्रिययज्ञसूत्रंपुत्रंविलासचतुरंशिवयोःशिवाय ॥ २ ॥ प्रातर्भजाम्यभयदं
खलुभक्तशोकदावानलंगणविभुंवरकुंजरास्यम् ॥ अज्ञानकाननविनाशनहव्यवाहमुत्साहवर्धनमहंसुतमीश्व
रस्य ॥ ३ ॥ श्लोकत्रयमिदंपुण्यंसदासाम्राज्यदायकम् ॥ प्रातरुत्थायसततंयः पठेत्प्रयतःपुमान् ॥ ४ ॥
प्रातःस्मरामिशरदिंदुकरोज्ज्वलाभांसद्रत्नवत्सकलकुंडलहारशोभाम् ॥ दिव्यायुधोर्जितसुनीलसहस्रहस्तां
रक्तोत्पलाभचरणांभवतींपरेशाम् ॥ १ ॥ प्रातर्नमामिमहिषासुरचंडमुंडशुंभासुरप्रमुखदैत्यविनाशदक्षाम् ॥
ब्रह्मेंद्ररुद्रमुनिमोहनशीललीलांचंडींसमस्तसुरमूर्तिमनेकरूपाम् ॥ २ ॥ प्रातर्भजामिभजतामखिलार्थदा
त्रींधात्रींसमस्तजगतांदुरितापहंत्रीम् ॥ संसारबंधनविमोचनहेतुभूतांमायांपरांसमधिगम्यपरस्यविष्णोः॥३॥
श्लोकत्रयमिदंदेव्याश्चंडिकायाःपठेन्नरः॥ सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते ॥ ४ ॥ प्रातःस्मरामिभव
भीतिहरंसुरेशंगंगाधरंवृषभवाहनमंबिकेशम्॥ खट्वांगशूलवरदाभयहस्तमीशंसंसाररोगहरमोषधमद्वितीयम्
॥१॥ प्रातर्नमामिगिरिशंगिरिजार्धदेहंसर्गस्थितिप्रलयकारणमादिदेवम् ॥ विश्वेश्वरंविजितविश्वमनोभिरामं
संसाररोगहरमौषधमद्वितियम् ॥२॥ प्रातर्भजामिशिवमेकमनंतमाद्यंवेदांतवेद्यमनघंपुरुषंमहांतं ॥ नामादिभे
दरहितंषडभावशून्यंसंसाररोगहरमौषधमद्वितीयम् ॥३॥ प्रातःसमुत्थायशिवंविचिंत्यश्लोकत्रयंचानुदिनंपठं
ति॥तेदुःखजालंबहुजन्मसंचितंहित्वापदंयांतितदेवशंभोः ॥४॥ प्रातःस्मरामिभवभीतिमहार्तिशांत्यैनारायणं

गरुडवाहनमब्जनाभम् ॥ ग्राहाभिभूतवरवारणमुक्तिहेतुंचक्रायुधंतरुणवारिजपत्रनेत्रम् ॥ १॥ प्रातर्नमामिमन
सावचसाचमूर्ध्नापादारविंदयुगुलंपरमस्यपुंसः ॥ नारायणस्यनरकार्णवतारणस्यपारायणप्रवणविप्रपरायणस्य
॥२॥ प्रातर्भजामिभजतामभयंकरंतंप्राक्सर्वजन्मकृतपापभयापहत्यै॥ योग्राहवक्त्रपतितांघ्रिगजेंद्रघोरशो
कप्रणाशमकरोद्धृतशंखचक्रः ॥३॥ श्लोकत्रयमिदंपुण्यंप्रातःप्रातःपठेत्तुयः ॥ लोकत्रयगुरुस्तस्मैदद्यादात्मप
दंहरिः ॥४॥ प्रातःस्मरामिरघुनाथमुखारविंदंमंदस्मितंमधुरभाषिविशालभालम् ॥ कर्णावलंबिचलकुंडलशो
भिगंडंकर्णांतदीर्घनयनंनयनाभिरामम् ॥ १ ॥ प्रातर्भजामिरघुनाथकरारविंदंरक्षोगणायभयदंवरदंद्विजेभ्यः ॥
यद्राजसंसदिविभज्यमहेशचापंसीताकरग्रहणमंगलमापसद्यः॥ २॥प्रातर्नमामिरघुनाथपदारविंदंवज्रांकुशा
दिशुभरेखिशुभावहंमे ॥ योगींद्रमानसमधुव्रतसेव्यमानंशापापहंसपदिगौतमधर्मपत्न्याः ॥३॥ प्रातर्वदामि
वचसारघुनाथनामवाग्दोषहारिसकलंशमलंनिहंति ॥ यत्पार्वतीस्वपतिनासहमोक्षकामाप्रीत्यासहस्रहरिना
मसमंजजाप॥ ४ ॥ प्रातःश्रयेश्रुतिनुतांरघुनाथमूर्तिंनीलांबुदोत्पलसितेतररत्ननीलाम् ॥ आमुक्तमौक्तिक
विशेषविभूषणाढ्यांध्येयांसमस्तमुनिभिर्जनमुक्तिहेतुम् ॥ ५ ॥ यःश्लोकपंचकमिदंप्रयतःपठेतानित्यंप्रभात
समयेपुरुषः प्रबुद्धः ॥ श्रीरामकिंकरजनेषुसएवमुख्योभूत्वाप्रयातिहरिलोकमनन्यलभ्यम् ॥ ६ ॥ ब्रह्मामुरारि
स्त्रिपुरांतकारिर्भानुःशशीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रःशनिराहुकेतवःकुर्वंतुसर्वेममसुप्रभातम् ॥ ७ ॥ भृगुर्व
सिष्ठःक्रतुरंगिराश्चमनुःपुलस्त्यःपुलहश्चगौतमः ॥ रैभ्योमरीचिश्च्यवनश्चदक्षःकुर्वंतुसर्वेममसुप्रभातम् ॥८॥

सनत्कुमारःसनकःसनंदनःसनातनोप्यासुरिपिंगलौच ॥ सप्तस्वराःसप्तरसातलानिकुर्वंतुसर्वेममसुप्रभातम्
॥९ ॥ सप्तार्णवाःसप्तकुलाचलाश्चसप्तर्षयोद्वीपवनानिसप्त ॥ भूरादिकृत्वाभुवनानिसप्तकुर्वंतुसर्वेममसुप्रभात
म् ॥१०॥ पृथ्वीसगंधासरसास्तथाऽपःस्पर्शीचवायुर्ज्वलितंचतेजः ॥ नभःसशब्दंमहतासहैवकुर्वंतुसर्वेमम
सुप्रभातम् ॥ ११ ॥ पुण्यश्लोकोनलोराजापुण्यश्लोकोयुधिष्ठिरः ॥ पुण्यश्लोकाचवैदेहीपुण्यश्लोकोजनार्दनः
॥१२॥ अहल्याद्रौपदीसीताताराममंदोदरीतथा ॥ पंचकंनास्मरेन्नित्यंमहापातकनाशनम् ॥१३॥ अश्वत्थामा
बलिर्व्यासोहनूमांश्चविभीषणः ॥ कृपःपरशुरामश्चसप्तैतेचिरजीविनः ॥ १४ ॥ सप्तैतान्संस्मरेन्नित्यंमार्कंडे
यंतथाष्टमम् ॥ जीवेद्वर्षशतंसाग्रमपमृत्युविवर्जितः ॥ १५ ॥ प्रल्हादनारदपराशरपुंडरीकव्यासांबरीषशु
कशौनकभीष्मदाल्भ्यान् ॥ रुक्मांगदार्जुनवसिष्ठविभीषणादीन्पुण्यानिमान्परमभागवतान्नमामि ॥१६॥
कर्कोटकस्यनागस्यदमयंत्यानलस्यच॥ ऋतुपर्णस्यराजर्षेःकीर्तनंकलिनाशनम्॥१७॥धर्मोविवर्धतियुधिष्ठिर
कीर्तनेनपापंप्रणश्यतिवृकोदरकीर्तनेन॥शत्रुर्विनश्यतिधनंजयकीर्तनेनमाद्रीसुतौकथयतांनभवंतिरोगाः।१८॥
अहोभाग्यमहोभाग्यंनंदगोपव्रजौकसाम्॥यन्मित्रंपरमानंदंपूर्णब्रह्मसनातनम्॥१९॥अयोध्यामथुरामायाका
शीकांचीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायिकाः॥२०॥अर्जुनःफाल्गुनोजिष्णुःकिरीटीश्वेतवाह
नः ॥बीभत्सुर्विजयीकृष्णःसव्यसाचीधनंजयः॥२१॥ उत्तिष्ठोत्तिष्ठगोविंदउत्तिष्ठगरुडध्वज ॥ उत्तिष्ठकम
लाकांतत्रैलोक्यंमंगलंकुरु॥ २२ ॥समुद्रवसनेदेविपर्वतस्तनमंडले ॥ विष्णुपत्निनमस्तुभ्यंपादस्पर्शंक्ष

मस्वमे ॥ २३ ॥ पलायध्वंपलायध्वंरेरेदानवराक्षसाः ॥ धर्मसंस्थापनार्थायरथारूढःस्वयंहरिः ॥ २४ ॥
वाराणस्यांभैरवोदेवोसंसारभयनाशनः ॥ अनेकजन्मपापंतुस्मरणेनविनश्यति ॥ २५ ॥ वाराणस्यां
दक्षिणेभागेकुक्कुटोनामवैद्विजः ॥ तस्यस्मरणमात्रेणदुःस्वप्नःसुखदोभवेत् ॥ २६ ॥ वाराणस्यामुत्तरे
भागेसुमंतुर्नामवैद्विजः ॥ तस्यस्मरणमात्रेणानिर्धनोधनवान्भवेत् ॥ २७ ॥ काशिकाशीतिकाशीतित्रिवारं
यःपठेन्नरः ॥ सोपिदेशांतरेवासीकाशीवासफलंलभेत् ॥२८॥ अशीवरुणयोर्मध्येपंचक्रोशीमहत्फलम् ॥
अमरामरणमिच्छंतिइतरेषांतुकाकथा॥२९॥ नंदिनीनलिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसंभू
तागंगात्रिपथगामिनी ॥ ३० ॥ भागीरथीभोगवतीजान्हवीत्रिजटेश्वरी ॥ द्वादशैतानिनामानिप्रातःकाले
सदापठेत् ॥ ३१ ॥ विश्वेशंमाधवंधुंडिंदंडपाणिंचभैरवम् ॥ वंदेकाशींगुहांगंगांभवानींमणिकर्णिकाम्
॥ ३२ ॥ वाराणसीपुरपतेभजाविश्वनाथा ॥ माझाप्रणामतुझियाचरणासिआतां ॥ मीमागतोंपरमपावनपुण्य
भिक्षा ॥ धावीमलात्वरितशांभविवेददीक्षा ॥१॥ श्रीधुंडिराजगणनायकदंडपाणी ॥ माझेउदंडअपराधम
नांतनाणीं॥ श्रीभैरवाचुकविंरौरवयातनारे ॥ वाराणसींतमजठेविंसनातनारे ॥२॥ इत्थंप्रभातेपरमंपवित्रंपठे
त्स्मरेद्वाशृणुयाच्चनित्यम् ॥ दुःस्वप्ननाशस्त्विहसुप्रभातंभवेच्चनित्यंभगवत्प्रसादात् ॥ ३ ॥ कराग्रेवसतेल
क्ष्मीःकरमूलेसरस्वती ॥ करमध्येतुगोविंदः प्रभातेकरदर्शनम् ॥ ४ ॥ ॥ इति प्रातःस्मरणं समाप्तं ॥

## ॥ २ ॥ अथ स्नानविधिप्रारंभः ॥

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ नमामिगंगेतवपादपंकजंसुरासुरैर्वंदितादिव्यरूपं ॥ भुक्तिंचमुक्तिंचददासिनित्यंभवानुसारेणसदानराणां ॥ १ ॥ दर्शनात्सर्वपापघ्नींस्पर्शनान्मोक्षदायिनीं ॥ स्नानेनमुक्तिदांपुण्यांभागीरथिंनमाम्यहं ॥२॥ ॥ अथसंकल्पः ॥ ॥ श्रीमन्महागणाधिपतयेनमोनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदेवताभ्योनमः ॥ ग्रामदेवताभ्योनमः ॥ वास्तुदेवताभ्योनमः ॥ शचीपुरंदराभ्यांनमः ॥ उमामहेश्वराभ्यांनमः ॥ मातापितृभ्यांनमः ॥ आदित्यादिनवग्रहदेवताभ्योनमः ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ अविघ्नमस्तु ॥ ॥ सुमुखश्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्नराजोगणाधिपः ॥ धूमकेतुर्गणाध्यक्षोभालचंद्रोगजाननः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंकटेचैवविघ्नस्तस्यनजायते ॥ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ सर्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषाममंगलं ॥ येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलंदैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरःश्यामोहृदयस्थोजनार्दनः ॥ विनायकंगुरुंभानुंब्रह्मविष्णु

महेश्वरान् ॥ सरस्वतींप्रणम्यादौ सर्वकार्यार्थसिद्धये ॥ अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः ॥ सर्वावि
घ्नहरस्तस्मैगणाधिपतयेनमः ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रिभुवनेश्वराः ॥ देवादिशंतुनःसिद्धिंब्रह्मेशानज
नार्दनाः ॥ श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमानस्यअद्यब्रह्मणोद्वितीयेपरार्धेविष्णुपदेश्रीश्वेतव
राहकल्पेवैवस्वतमन्वंतरेभरतवर्षेभरतखंडेजंबुद्वीपेदंडकारण्येदेशेगोदावर्याः दक्षिणेतीरेकृष्णावेण्योः उ
त्तरेतीरेशालिवाहनशकेबौद्धावतारेरामक्षेत्रेरामरामाश्रमेअस्मिन्वर्तमानेअमुकनामसंवत्सरेअमुकअयनेअमु
कऋतौअमुकमासेअमुकपक्षेअमुकातिथौअद्यवासरः वासरस्तु अमुकवासरेअद्यदिवसनक्षत्रंविष्णुस्थेनक्ष
त्रेविष्णुस्थेवर्तमानेचंद्रेविष्णुस्थेश्रीसूर्येविष्णुस्थेदेवगुरौशेषेषुग्रहेषुयथायथाराशिस्थानस्थितेषुसत्सु एवंगु
णविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीपरमेश्वरप्रीत्यर्थं ॥ का
यिकवाचिकमानसिकसांसर्गिकज्ञाताज्ञातस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपापक्षयार्थंगंगाभागीरथी
तीर्थेस्नानमहंकरिष्ये ॥ ॐआपोहिष्ठामयोभुवः स्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिवतमोरस
स्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥
आपोवाइदꣳसर्वंविश्वाभूतान्यापः प्राणावाआपः पशवआपोन्नमापोमृतमापः सम्राडापोविराडापःस्वराडा
पश्छंदाꣳस्यापोज्योतीꣳष्यापोयजूꣳष्यापः सत्यमापः सर्वादेवताआपोभूर्भुवः सुवरापओम् ॥ स्नानंकृत्वा ॥

 इमंमेगंगेयमुनेसरस्वतिशुतुद्रिः स्तोमं॑ सचतापरुष्णिया ॥ असिक्रियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्या 
सुषोमया ॥ अघमर्षणं ॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरात्रिरजायतततः समुद्रोअर्णवः ॥
 समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापू
र्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः ॥ १ ॥ ऋतंचसत्यंचाभीद्धात्तपसोध्यजायत ॥ ततोरा
त्रिरजायतततःसमुद्रोअर्णवः ॥ समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतो
वशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः ॥ २ ॥ ऋतंचसत्यंचा
भीद्धात्तपसोध्यजायत ॥ ततोरात्रिरजायतततः समुद्रोअर्णवः॥ समुद्रादर्णवादधिसंवत्सरोअजायत॥ अहोरा
त्राणिविदधद्विश्वस्यमिषतोवशी ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचांतरिक्षमथोसुवः
॥ ३ ॥ इतित्रिरावृत्त्याअघमर्षणंकुर्यात् ॥ ॥ अथअर्घ्यमंत्राः ॥ ॥ नमः कमलनाभायनमस्तेजल
शायिने ॥ नमस्तेकेशवानंतगृहाणार्घ्यंनमोस्तुते ॥१॥ एहिसूर्यसहस्रांशोतेजोराशिजगत्पते ॥ अनुकंपयमां
भक्त्यागृहाणार्घ्यंनमोस्तुते॥२॥ब्रह्मकमंडलोद्भूतेगंगेत्रिपथगामिनि॥ त्रैलोक्यवंदितेदेविगृहाणार्घ्यंनमोस्तुते 
॥ ३ ॥ तपनस्यसुतेदेवियमुनेचमहानदि ॥ शुद्धानांशुद्धयेदेविगृहाणार्घ्यंनमोस्तुते ॥ ४ ॥ किरणाधूत

पापाच्चपुण्यतोयासरस्वती ॥ गंगाचयमुनाचैवगृहाणार्घ्यंनमोस्तुते ॥ ५ ॥ पापोहंपापकर्माणांपापात्मा पापसंभवः ॥ त्राहिमांकृपयागंगेगृहाणार्घ्यंनमोस्तुते ॥ ६ ॥ पुनश्चस्नानंकृत्वा ॥ ॥ अथसंकल्पः ॥ ॥ अद्यपूर्वोच्चरितवर्तमानएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौ ममआत्मनःश्रुतिस्मृतिपुराणोक्तफल प्राप्त्यर्थं ॥ स्नानांगदेवऋषिपितृतर्पणंकरिष्ये ॥ तान्देवांस्तर्पयामि ॥ भूर्देवांस्तर्पयामि ॥ भुवर्देवांस्तर्प यामि ॥ सुवर्देवांस्तर्पयामि ॥ भूर्भुवः सुवर्देवांस्तर्पयामि ॥ निवीती ॥ तान्‌ऋषींस्तर्पयामि ॥ भूःऋषींस्त र्पयामि ॥ सुवःऋषींस्तर्पयामि ॥ भूर्भुवः सुवः ऋषींस्तर्पयामि ॥ प्राचीनावीती ॥ तान्‌पितॄन्स्तर्पयामि॥ भूःपितॄन्स्तर्पयामि ॥ भुवःपितॄन्स्तर्पयामि ॥ सुवःपितॄन्स्तर्पयामि ॥ भूर्भुवः सुवः पितॄन्स्तर्पयामि ॥ अ नेनतर्पणेनपरमेश्वरःप्रीयतां ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तद्दोषपरिहारार्थयक्ष्माणंतर्पया म्यहं ॥ वस्त्रपरिधानंकृत्वा ॥ आचम्य ॥ भस्मधारणं ॥ ॥ इतिस्नानविधिःसमाप्तः ॥ ७ ॥

## ॥ ३ ॥ अथ गंगाष्टकप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथगंगाष्टकप्रारंभः ॥ मातःशैलसुतासपत्निवसुधाशृंगारहारावलिस्वर्गारोहण वैजयंतिभवतींभागीरथींप्रार्थये ॥ त्वत्तीरेवसतस्त्वदंबुपिबतस्त्वद्वीचिषुप्रेंखतस्त्वन्नामस्मरतस्त्वदर्पितदृशः स्यान्मेशरीरव्ययः ॥ १ ॥ त्वत्तीरेतरुकोटरांतरगतोगंगेविहंगोवरंत्वन्नीरेनरकांतकारिणिवरंमच्छोथवा

कच्छपः ॥ नैवान्यत्रमदांधसिंधुरघटासंघट्टघंटारणत्कारस्तत्रसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥ उ
क्षापक्षीतुरगउरगःकोपिवावारणोवावारीणःस्यांजननमरणक्लेशदुःखासहिष्णुः ॥ नत्वन्यत्रप्रविरलरणत्किं
किणीक्वाणमिश्रंवारस्त्रीभिश्चमरमरुतावीजितोभूमिपालः ॥ ३ ॥ काकैर्निष्कुषितंश्वभिःकवलितंगोमायु
भिर्लुंठितंस्रोतोभिश्चलितंतटांबुलुलितंवीचीभिरांदोलितं ॥ दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानःकदा
द्रक्ष्येहंपरमेश्वरित्रिपथगेभागीरथिस्वंवपुः ॥ ४ ॥ अभिनवबिसवल्लीपादपद्मस्यविष्णोर्मदनमथनमौलेर्मा
लतीपुष्पमाला ॥ जयतिजयपताकाकाप्यसौमोक्षलक्ष्म्याःक्षपितकलिकलंकाजान्हवीनःपुनातु ॥ ५ ॥
एतत्तालतमालसालसरलव्यालोलवल्लीलताछन्नंसूर्यकरप्रतापरहितंशंखेंदुकुंदोज्वलं ॥ गंधर्वामरसिद्धकि
न्नरवधूतुंगस्तनास्फालितंस्नानायप्रतिवासरंभवतुमेगांगंजलंनिर्मलं ॥ ६ ॥ गांगंवारिमनोहारिमुरारिचर
णच्युतं ॥ त्रिपुरारिशिरश्चारिपापहारिपुनातुमां ॥ ७ ॥ पापापहारिदुरितारितरंगधारिशैलप्रचारिगिरिराज
गुहाविदारि ॥ झंकारकारिहरिपादरजोपहारिगांगंपुनातुसततंशुभकारिवारि ॥ ८ ॥ भगवतितवतीरेनीर
मात्राशनोहंविगतविषयतृष्णः कृष्णमाराधयामि ॥ सकलकलुषभंगेस्वर्गसोपानसंगेप्रचुरतरतरंगेदेविगं
गेप्रसीद ॥ ९ ॥ गंगाष्टकंपठतियः प्रयतःप्रभातेवाल्मीकिनाविरचितंशुभदंमनुष्यः ॥ प्रक्षाल्यगात्रक
लिकल्मषपंकमाशुमोक्षंलभेत्पततिनैवनरोभवाब्धौ ॥ १० ॥ विष्णुपादाब्जसंभूतेगंगेत्रिपथगामिनि ॥
धर्मद्रवेतिविख्यातेपापंमेहरजान्हवि ॥ ११ ॥ ॥ इतिश्रीवाल्मीकिनाविरचितंगंगाष्टकंसंपूर्णम् ॥ ॥

## ॥ ४ ॥ अथ विभूतिधारणमंत्रप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथविभूतिधारणमंत्रः ॥ ॥ ॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिं
पतिर्ब्रह्मणोधिंपतिर्ब्रह्माशिवोमेंअस्तुसदाशिवों ॥ शिरसि ॥ ॐतत्पुरुषायविद्महेंमहादेवायंधीमहि ॥ त
न्नोंरुद्रःप्रचोदयात् ॥ मुखे ॥ ॐअघोरेंभ्योथघोरेंभ्योघोरघोरंतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमंस्तेअस्तुरु
द्ररूपेभ्यः ॥ हृदये ॥ ॐवामदेवायनमोंज्येष्ठायनमंःश्रेष्ठायनमोंरुद्रायनमःकालांयनमःकलंविकरणायन्
मोबलंविकरणायनमोबलांयनमोबलंप्रमथनायनमः सर्वंभूतदमनायनमोंमनोन्मंनायनमंः ॥ गुह्ये ॥ ॐ
सद्योजातंप्रपद्यामिसद्योजातायवैनमोनमंः ॥ भवेभंवेनातिंभवेभवस्वमांभवोद्भवायनमंः ॥ पादयोः ॥
अग्निरितिभस्म ॥ वायुरितिभस्म ॥ जलमितिभस्म ॥ स्थलमितिभस्म व्योमेतिभस्म ॥ सर्वँहवाइदं
भस्म ॥ मानंस्तोकेतनयेमानआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवंधीर्हविष्मंतो
नमसाविधेमते ॥ ॥ इतिसर्वांगेभस्मविलिप्य ॥ आचम्य ॥

## ॥ ५ ॥ अथ पुरुषसूक्तप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ ॐसहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ सभूमिंविश्वतोवृत्वा ॥ अत्यं

तिष्ठद्दशांगुलं ॥ पुरुषएवेदꣳसर्वं ॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥एतावान
स्यमहिमा ॥ अतोज्यायाꣳश्चपूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥ त्रिपादूर्ध्वउदै
॥ १ ॥ त्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्रामत् ॥ साशनानशनेअभि ॥ तस्माद्विराडजायत ॥
विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ यत्पुरुषेणहविषा ॥ देवायज्ञमतन्वत ॥
वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ सप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञं
तन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ तंयज्ञंबर्हिषिप्रौक्षन् ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत ॥ साध्याऋ
षयश्चये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूꣳस्ताꣳश्चक्रेवायव्यान् ॥ आरण्यान्ग्राम्याश्च
ये ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचःसामानिजज्ञिरे ॥ छंदाꣳसिजज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ त
स्मादश्वाअजायंत ॥ येकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात् ॥ तस्माज्जाताअजावयः ॥ यत्पुरुषंव्य
दधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्येते ॥ ब्राह्मणोस्यमुखमासीत् ॥
बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्याꣳशूद्रोअजायत ॥ चंद्रमामनसोजातः ॥ चक्षोःसूर्योअ ॥ १ ॥
जायत ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौःसमवर्तत ॥पद्भ्यां

यामिछंदर्षीनावाहयामिश्रियमावाहयामिह्रियमावाहयामि॥आपोहिष्ठामयोभुव स्तानऊर्जेदधातन॥महेरणा
यचक्षसे ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजि
न्वथ ॥ आपोजनयथाचनः ॥ आपोवाइद ँ सर्वविश्वाभूतान्यापःप्राणावाआपः पशवआपोन्नमापोमृत
मापः संम्राडापोविराडापः स्वराडाप श्छंदा ँ स्यापोज्योती ँ ष्यापोयजू ँ ष्यापः सत्यमापःसर्वादेवताआ
पोभूर्भुवःसुवरापओम् ॥ आपः पुनंतुपृथिवींपृथिवीपूतापुनातुमां ॥ पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां॥ य
दुच्छिष्टमभोज्यंयद्वादुश्चरितंमम ॥ सर्वपुनंतुमामापोसतांचप्रतिग्रह ँ स्वाहा ॥ केशवायनमः ॥ नाराय
णायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ दधिक्राव्णोअकारिषंजिष्णोरश्वस्यवाजिनः ॥ सुरभिनो
मुखाकरत्प्रणआयू ँ षितारिषत् ॥ आपोहिष्ठामयोभुवस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ योवःशिव
तमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥ तस्माअरंगमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथा
चनः ॥ हिरण्यवर्णाःशुचयः पावकायासुजातःकश्यपोयास्विंद्रः ॥ अग्निंयागर्भंदधिरेविरूपास्तानआपः श ँ
स्योनाभवंतु ॥ यासा ँ राजावरुणोयातिमध्येसत्यानृतेअवपश्यंजनानां ॥ मधुश्चुतः शुचयोयाः पावकास्तान
आपः श ँ स्योनाभवंतु ॥ यासांदेवादिविकृण्वंतिभक्षंयाअंतरिक्षेबहुधाभवंति ॥ याःपृथिवींपयसोंदंति

शुक्रास्तानआपःशँ स्योनाभवंतु ॥ शिवेनमाचक्षुषापश्यतापःशिवयातनुवोपस्पृशतत्वचंमे ॥ सर्वाँअ
ग्नीँरप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ॥ पवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपु
नातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वआयवः ॥ जातवेदःपवित्रवत् ॥ पवित्रेण
पुनाहिमा ॥ शुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूँरनु ॥ यत्तेपवित्रमर्चिषि ॥ अग्नेविततमंतरा ॥ ब्रह्मतेन
पुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवेनच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागात् ॥ य
स्यैबव्हीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्येषु ॥ वयँस्यामपतयोरयीणां ॥ वैश्वानरोरश्मिभिर्मापुना
तु ॥ वातःप्राणेनेषिरोमयोभूः ॥ द्यावापृथिवीपयसापयोभिः ॥ ऋतावरीयज्ञियेमापुनीतां ॥ बृहद्भिःसवितः
स्तृभिः ॥ वर्षिष्ठैर्देवमन्मभिः ॥ अग्नेदक्षैःपुनाहिमा ॥ येनदेवाअपुनत ॥ येनापोदिव्यंकशः ॥ तेनदिव्ये
नब्रह्मणा ॥ इदंब्रह्मपुनीमहे ॥ यःपावमानीरध्येति ॥ ऋषिभिःसंभृतँरसं ॥ सर्वँसपूतमश्नाति ॥ स्व
दितंमातरिश्वना ॥ पावमानीर्योअध्येति ॥ ऋषिभिःसंभृतँरसं ॥ तस्मैसरस्वतीदुहे ॥ क्षीरँसर्पिर्मधूद
कं ॥ पावमानीःस्वस्त्ययनीः ॥ सुदुघाहिपयस्वतीः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतँहितं ॥ पा
वमानीर्दिशंतुनः ॥ इमंल्लोकमथोअमुं ॥ कामान्त्समर्धयंतुनः ॥ देवीर्देवैःसमाभृताः ॥ पावमानीःस्वस्त्य

यंनीः॥ सुदुघाहिघृतश्चुतः ॥ ऋषिभिःसंभृतोरसः ॥ ब्राह्मणेष्वमृतं ꣳ हितं ॥ येनदेवाःपवित्रेण ॥ आत्मानं
पुनतेसदा ॥ तेनसहस्रधारेण ॥ पावमान्यःपुनंतुमा ॥ प्राजापत्यंपवित्रं ॥ शतोद्यामꣳ हिरण्मयं ॥ तेन
ब्रह्मविदोवयं ॥ पूतंब्रह्मपुनीमहे ॥ इंद्रःसुनीतीसहमापुनातु ॥ सोमःस्वस्त्यावरुणःसमीच्या ॥ यमोराजा
प्रमृणाभिःपुनातुमा ॥ जातवेदामोर्जयंत्यापुनातु ॥ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नःस्नात्वीमलादिव ॥ पू
तंपवित्रेणेवाज्यं॥ आपःशुंधंतुमैनसः ॥ ॐभूर्भुवःसुवः ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचो
दयात् ॥ श्रीसवितासूर्यनारायणायइदमर्घ्यंदत्तंनमम ॥ इतित्रीनर्घ्यान्दत्वा ॥३॥ असावादित्योब्रह्म ॥ आच
म्य ॥ के० यनमः॥ ना० यनमः ॥ मा० यनमः ॥ गो० यनमः ॥ विष्णवेनमः ॥ श्रीकृष्णायनमः ॥ ॐ भूः ॥ ओं
भुवः ॥ ओꣳ सुवः ॥ ओंमहः ॥ ओंजनः ॥ ॐ तपः ॥ ओꣳ सत्यं ॥ ॐ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥
धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरों ॥ उद्वयंतमसस्परिपश्यंतोज्योतिरुत्तरं ॥
देवंदेवत्रासूर्यमगन्मज्योतिरुत्तमं ॥ उदुत्यंजातवेदसंदेवंवहंतिकेतवः ॥ दृशेविश्वायसूर्यं ॥ चित्रंदेवानामु
दगादनीकंचक्षुर्मित्रस्यवरुणस्याग्नेः ॥ आप्राद्यावापृथिवीअंतरिक्षꣳ सूर्यआत्माजगतस्तस्थुषश्च ॥ तच्चक्षुर्दे
वहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदः शतंजीवेमशरदःशतंनंदामशरदःशतंमोदामशरदः शतंभवाम

शरदः शत ꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे ॥ य उदगान्महतोर्णवाद्विभ्राजमानः सरिरस्य मध्यात्समा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥ अपक्रामंतु भूतानि पिशाचाः सर्वतोदिशं ॥ सर्वेषामवरोधेन ब्रह्मकर्म समारभे ॥ पृथ्वीति मंत्रस्य ॥ मेरुपृष्ठऋषिः ॥ कूर्मो देवता ॥ सुतलं छंदः ॥ आसने विनियोगः ॥ पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनं ॥ अंगुष्ठाग्रे तु गोविंदं तर्जन्यां तु महीधरं ॥ मध्यमायां हृषीकेशं अनामिक्यां त्रिविक्रमं ॥ कनिष्ठिक्यां न्यसेद्विष्णुं करमध्ये च माधवं ॥ एवं च करविन्यासं सर्वपापप्रणाशनं ॥ भूः पादाभ्यां नमः ॥ भुवः जानुभ्यां नमः ॥ सुवः ॥ कटिभ्यां नमः ॥ महः नाभ्यै नमः ॥ जनः हृदयाय नमः ॥ तपः कंठाय नमः ॥ परब्रह्म शिरसे स्वाहा ॥ तत्सवितुर्ब्रह्मात्मने हृदयाय नमः ॥ वरेण्यं विष्णुनात्मने शिरसे स्वाहा ॥ भर्गो देवस्य रुद्रात्मने शिखायै वषट् ॥ धीमहि परमात्मने कवचाय हुं ॥ धियो यो नो ज्ञानात्मने नेत्रत्रयाय वौषट् ॥ प्रचोदयात्सत्यात्मने अस्त्राय फट् ॥ इति दिग्बंधः गायत्रिया गायत्री छंदो विश्वामित्र ऋषिः सविता देवता ग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदय ꣳ रुद्रः शिखा पृथिवी योनिः प्राणापानव्यानोदानसमाना सप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्वि ꣳ शत्यक्षरा त्रिपदा षट्कुक्षिः पंचशीर्षोपनयने विनियोगः ॥ ओं भूः ॥ ओं भुवः ॥ ओ ꣳ सुवः ॥ ओं महः ॥ ॐ जनः ॥ ओं तपः ॥ ओ ꣳ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ओमापो ज्योती रसोमृतं ब्रह्म भूर्भुवः सु

वरोम् ॥ मध्यान्हसंध्यांगत्वेनअष्टोत्तरशतसंख्ययागायत्रीजपमहंकरिष्ये॥ १०८॥२८॥सुमुखंसंपुटंचैवंवितं
तंविस्तृतंतथा ॥ द्विमुखंत्रिमुखंचैवंचतुःपंचमुखंतथा॥ षड्मुखाधोमुखंचैवंव्यापकांजलिकंतथा ॥ शकटं
यमपाशंचग्रंथितंचोल्मुकोल्मुकं ॥ प्रलंबंमुष्टिकंचैवंमत्स्यंकूर्मवराहकं॥ सिंव्हाक्रांतंमहाक्रांतंमुद्गलंपल्लवंत
था ॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्र्यंक्षणैर्युक्तामिंदुकलानिबद्धमुकुटांतत्त्वार्थवर्णात्मिकां ॥ गाय
त्रींवरदाभयांकुशकशांशुभ्रंकपालंगुणंशंखंचक्रमथारविंदयुगुलंहस्तैर्वहंतींभजे ॥ माहांमालेमाहामायेसर्व
शक्तिसमन्विते ॥ चतुर्वर्गस्त्वयिन्यस्तं स्तस्मान्मेसिद्धिदाभव ॥ ॐ भूर्भुवःसुवःतत्सवितुर्वरेण्यंभर्गोदेव
स्यधीमहिधियोयोनःप्रचोदयात् ॥ इतिजपित्वा ॥ तत्सवितुर्ब्रह्मात्मनेह्रदयायनमः ॥ वरेण्यंविष्णुनात्मनेशि
रसेस्वाहा ॥ भर्गोदेवस्यरुद्रात्मनेशिखायैवषट्॥धीमाहिपरमात्मनेकवचायहुं ॥ धियोयोनोज्ञानात्मनेनेत्रत्रयाय
वौषट् ॥ प्रचोदयात्सत्यात्मनेअस्त्रायफट्इतिदिग्बंधः ॥ सुरभिर्ज्ञानशूर्पंचयोनिः कूर्मोथपंकजं ॥ लिंगंनि
र्याणमुद्राश्चजपांतेष्टौप्रकीर्तिताः ॥ नमःप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमोदक्षिणायै
दिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमः प्रतीच्यैदिशेयाश्च देवता एतस्यां प्रतिवसंत्येताभ्यश्चन
मोनमउदीच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमऊर्ध्वायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्ये

ताभ्यश्च नमोनमोधरायैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्च नमोनमोवांतरायैदिशेयाश्चदेवताएतस्यांप्र
तिवसंत्येताभ्यश्च नमोनमोगंगायमुनयोर्मध्येयेवसंतितेमेप्रसन्नात्मान श्चिरंजीवितंवर्धयंतिनमोगंगायमुनयोर्मु
निभ्यश्च नमोनमोगंगायमुनयोर्मुनिभ्यश्च नमः॥अवांतरदिशाभ्योनमः ॥ स ँ स्रवंतुदिशोमयिसमागच्छंतुसू
नृताः ॥ सर्वेकामाअभियंतुनःप्रियाअभिस्रवंतुनः प्रियाः ॥ अभिवादये (प्रवराचाआणिगोत्राचाउच्चारकरावा
त्रिप्रवरान्वितअमुकगोत्रोत्पन्नः॥ यजुर्वेदस्यतैत्तिरीयशाखांतर्गतहिरण्यकेशीशाखाध्यायीअमुकदेवशर्माहं ॥
भोगुरोअभिवादयामि ॥ नमोब्रह्मण्यदेवायगोब्राह्मणहितायच॥ जगद्धितायकृष्णायगोविंदायनमोनमोगोविं
दायनमोनमः॥उत्तमेशिखरेजाते भूम्यांपर्वतमूर्धनि ॥ब्राह्मणेभ्योभ्यनुज्ञातागच्छदेवियथासुखं॥ स्तुतोमयाव
दावेदमाताप्रचोदयंतीपवनेद्विजाता ॥ आयुःपृथिव्यांद्रविणंब्रह्मवर्चसंमह्यंदत्वाप्रजातुंब्रह्मलोकं ॥ घृणिःसूर्य
आदित्योनप्रभावात्यक्षरं॥मधुक्षरंतितद्रसं॥ सत्यंवैतद्रसमापोज्योतीरसोमृतंब्रह्मभूर्भुवःसुवरोम्॥ब्रह्मलोकाय
नमः ॥विष्णुलोकायनमः ॥ रुद्रलोकायनमः ॥ संध्यायैनमः ॥ विद्यायैनमः ॥ सरस्वत्यैनमः ॥ वेदायनमः ॥ वेद
पुरुषायनमः॥ इष्टदेवताभ्यो ०॥कुलदेवताभ्यो ०॥ स्थानदेवताभ्यो ०॥ वास्तुदेवताभ्यो ० ॥एतत्कर्मप्रधानदेव
ताभ्यो ०॥ सर्वेभ्योदेवेभ्यो ०॥ सर्वेभ्योब्राह्मणेभ्योनमो ०॥ आकाशात्पतितंतोयंयथागच्छतिसागरं ॥सर्वदेवनं
मस्कारः केशवंप्रतिगच्छति ॥१॥ केशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥

विष्णवेनमः ॥ मधुसूदनायनमः ॥ त्रिविक्रमायनमः ॥ वामनायनमः ॥ श्रीधरायनमः ॥ हृषीकेशायनमः ॥ पद्मनाभायनमः ॥ दामोदरायनमः ॥ संकर्षणायनमः ॥ वासुदेवायनमः ॥ प्रद्युम्नायनमः ॥ अनिरुद्धाय नमः ॥ पुरुषोत्तमायनमः ॥ अधोक्षजायनमः ॥ नारसिंहायनमः ॥ अच्युतायनमः ॥ जनार्दनायनमः ॥ उपेंद्रायनमः ॥ हरयेनमः ॥ श्रीकृष्णायनमः ओंभूः ॥ ॐ भुवः ॥ ओं सुवः ॥ ॐ महः ॥ ॐ जनः ॥ ओंतपः ॥ ओंसत्यं ॥ ॐ तत्संवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ओमापोज्योतीरसो मृतंब्रह्मभूर्भुवःसुवरों ॥ अनेनमध्यान्हसंध्योपासनाख्येनकर्मणाभगवान्परमेश्वरः प्रीयतांनमम ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ वर्षट्ते० ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १ ॥ ॥ अथ देवपूजा प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ ॐ केशवायनमः ॥ नारायणायनमः ॥ माधवायनमः ॥ गोविंदायनमः ॥ विष्णवेनमः ॥ मधुसूदनायनमः ॥ त्रिविक्रमायनमः ॥ वामनायनमः ॥ श्रीधरायनमः ॥ हृषीकेशायनमः ॥ पद्मनाभायनमः ॥ दामोदरायनमः ॥ संकर्षणायनमः ॥ वासुदेवायनमः ॥ प्रद्युम्नायनमः ॥ अनिरुद्धायनमः ॥ पुरुषोत्तमायनमः ॥ अधोक्षजायनमः ॥ नारसिंहायनमः ॥ अच्युतायनमः ॥ जनार्दनाय

नमः ॥ उपेंद्रायनमः ॥ हरयेनमः ॥ श्रीकृष्णायनमः ॥ ॐ भूः ॥ ॐ भुवः ॥ ओ॑ᳲसुवः ॥ ॐ महः ॥
ॐ जनः ॥ ॐ तपः ॥ ओ॑ᳲस॒त्यं ॥ ॐ तत्स॑वि॒तुर्वरे॑ण्यं॒भर्गो॑दे॒वस्य॑धीमहि ॥ धियो॒योनः॑प्रचो॒दया॑त् ॥ ओ
मापो॒ज्योती॒रस॒ोमृत॒ंब्रह्म॒भूर्भुव॒ःसुव॒रों ॥ श्रीमन्महागणाधिपतयेनमोनमः ॥ इष्टदेवताभ्योनमः ॥ कुलदे
वताभ्योनमः ॥ ग्रामदेवताभ्योनमः ॥ वास्तुदेवताभ्योनमः ॥ शचीपुरंदराभ्यांनमः ॥ उमामहेश्वराभ्यांनमः ॥
मातापितृभ्यांनमः ॥ सर्वेभ्योदेवेभ्योनमः ॥ सर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ अविघ्नमस्तु ॥ हरिः ॥ ॐ सुमुख
श्चैकदंतश्चकपिलोगजकर्णकः ॥ लंबोदरश्चविकटोविघ्नराजोगणाधिपः ॥ धूम्रकेतुर्गणाध्यक्षोभालचंद्रो
गजाननः ॥ द्वादशैतानिनामानियःपठेच्छृणुयादपि ॥ विद्यारंभेविवाहेचप्रवेशेनिर्गमेतथा ॥ संग्रामेसंक
टेचैवविघ्नस्तस्यनजायते ॥ शुक्लांबरधरंदेवंशशिवर्णंचतुर्भुजं ॥ प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये ॥ स
र्वमंगलमांगल्येशिवेसर्वार्थसाधिके ॥ शरण्येत्र्यंबकेगौरिनारायणिनमोस्तुते ॥ सर्वदासर्वकार्येषुनास्तितेषा
ममंगलं ॥ येषांहृदिस्थोभगवान्मंगलायतनंहरिः ॥ तदेवलग्नंसुदिनंतदेवताराबलंचंद्रबलंतदेव ॥ विद्याबलं
दैवबलंतदेवलक्ष्मीपतेतेंघ्रियुगंस्मरामि ॥ लाभस्तेषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरःश्यामोहृद
यस्थोजनार्दनः ॥ विनायकंगुरुंभानुंब्रह्मविष्णुमहेश्वरान् ॥ सरस्वतींप्रणम्यादौसर्वकार्यार्थसिद्धये ॥
अभीप्सितार्थसिद्ध्यर्थंपूजितोयःसुरासुरैः ॥ सर्वविघ्नहरस्तस्मैगणाधिपतयेनमः ॥ सर्वेष्वारंभकार्येषुत्रयस्त्रि
भुवनेश्वराः ॥ देवादिशंतुनःसिद्धिंब्रह्मेशानजनार्दनाः ॥ श्रीमद्भगवतोमहापुरुषस्यविष्णोराज्ञयाप्रवर्तमान

स्यअद्यब्रह्मणोद्वितीयेपरार्धेविष्णुपदेश्रीश्वेतवराहकल्पेवैवस्वतमन्वंतरेभरतवर्षेभरतखंडेकलियुगेकलिप्रथ
मचरणेजंबुद्वीपेदंडकारण्येदेशेगोदावर्याः दक्षिणेतीरेकृष्णावेण्योः उत्तरेतीरेशालिवाहनशकेबौद्धावतारेराम
क्षेत्रेरामरामाश्रमेअस्मिन्वर्तमानेअमुकनामसंवत्सरे ॥ अमुकायने ॥ अमुकऋतौ ॥ अमुकमासे ॥
अमुकपक्षे ॥ अमुकतिथौ ॥ अद्यवासरः वासरस्तु ॥ अमुकवासरे ॥ अद्यदिवसनक्षत्रं ॥ विष्णु
स्थेनक्षत्रे ॥ विष्णुस्थेवर्तमानेचंद्रे ॥ विष्णुस्थेश्रीसूर्ये ॥ विष्णुस्थेदेवगुरौ ॥ शेषेषुग्रहेषुयथायथाराशि
स्थानस्थितेषुसत्सुशुभनामशुभकरणएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौममआत्मनः श्रुतिस्मृतिपुरा
णोक्तफलप्राप्त्यर्थं ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताप्रीत्यर्थंयथामीलितोपचारद्रव्यैःपूजनमहंकरिष्ये ॥
तदंगंकलशपूजनंशंखपूजनंघंटापूजनंपुरुषसूक्तन्यासांश्चकरिष्ये ॥ पृथ्वीतिमंत्रस्यमेरुपृष्ठऋषिः कूर्मोदेव
तासुतलंछंदः आसनेविनियोगः ॥ ऊर्ध्वकेशीविरूपाक्षीमांसशोणितभोजने ॥ तिष्ठदेविशिखाबद्धेचामुंडे
ह्यपराजिते ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामवरोधेनपूजाकर्मसमारभे ॥ तीक्ष्णदंष्ट्र
महाकायकल्पांतदहनोपम ॥ भैरवायनमस्तुभ्यमनुज्ञांदातुमर्हसि ॥ षोडशर्चस्यसूक्तस्यनारायणऋषिः ॥
जगद्बीजपरमपुरुषोदेवताअंत्यात्रिष्टुप्न्यासेपूजनेविनियोगः ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥
मुखंकिमस्यकौबाहू ॥ कावूरूपादावुच्येते ॥ हृदयायनमः ॥ ब्राह्मणोस्यमुखमासीत् ॥ बाहूराजन्यःकृतः ॥

 



ऊरूतदस्ययद्वैश्यः ॥ पद्भ्यां॒शूद्रोअजायत ॥ शिरसेस्वाहा ॥ चंद्रमामनसोजातः ॥ चक्षोःसूर्योअजाय
त ॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ शिखायैवषट् ॥ नाभ्याआसीदंतरिक्षं ॥ शीर्ष्णोद्यौः सम
वर्तत ॥ पद्भ्यांभूमिर्दिशःश्रोत्रात् ॥ तथालोका॒अकल्पयन् ॥ कवचायहुं ॥ सप्तास्यासन्परिधयः ॥ त्रिःस
प्तसमिधःकृताः ॥ देवायद्यज्ञंतन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ नेत्रत्रयायवौषट् ॥ यज्ञेनयज्ञमयजंतदेवाः ॥
तानिधर्माणिप्रथमान्यासन् ॥ तेहनाकंमहिमानःसचंते ॥ यत्रपूर्वेसाध्याःसंतिदेवाः ॥ अस्त्रायफट् ॥ कल
शस्यमुखेविष्णुःकंठेरुद्रःसमाश्रितः ॥ मूलेतत्रस्थितोब्रह्मामध्येमातृगणाःस्मृताः ॥ कुक्षौतुसागराःसर्वेसप्त
द्वीपावसुंधरा ॥ ऋग्वेदोथयजुर्वेदःसामवेदोह्यथर्वणः ॥ अंगैश्चसहिताः सर्वेकलशंतुसमाश्रिताः ॥ अत्रगा
यत्रीसावित्रीशांतिः पुष्टिकरीतथा ॥ आयांतुदेवपूजार्थंदुरितक्षयकारकाः ॥ गंगेचयमुनेचैवगोदावरिसरस्व
ति ॥ नर्मदेसिंधुकावेरिजलेस्मिन्संनिधिंकुरु ॥ ॐ भूर्भुवःसुवःकलशायनमः ॥ विलेपनार्थेचंदनंसमर्पयामि ॥
अलंकरणार्थेअक्षतान्समर्पयामि पूजार्थेपुष्पंसमर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ कलशो
दकेनपूजाद्रव्याणिप्रोक्ष्य ॥ आत्मानंप्रोक्ष्य अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंस
बाह्याभ्यंतरःशुचिः ॥ कलशमुद्रांप्रदर्श्य ॥ शंखादौचंद्रदैवत्यंकुक्षौवरुणदेवता ॥ पृष्ठेप्रजापतिश्चैवअग्रे
गंगासरस्वती ॥ त्वंपुरासागरोत्पन्नोविष्णुनाविधृतःकरे ॥ अग्रतःसर्वदेवानांपांचजन्यनमोस्तुते ॥ पांचजन्या

यविद्महेपावमानायधीमहि ॥ तन्नोशंखः प्रचोदयात् ॥ शंखदेवताभ्योनमः विलेपनार्थेचंदनंसमर्पयामि ॥ अलंकरणार्थेतुलसीपत्रंसमर्पयामि ॥ शंखोदकेनपूजाद्रव्याणिप्रोक्ष्य ॥ आत्मानंप्रोक्ष्य ॥ अपवित्रः पवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ शंखमुद्रांप्रदर्श्य ॥ आगमार्थंतुदेवानांगमनार्थंतुरक्षसां ॥ कुरुघंटेरवंतत्रदेवताव्हानलांछनं ॥ घंटायैनमः विलेपनार्थेचंदनंसमर्पयामि ॥ अलंकरणार्थेअक्षतान्त्समर्पयामि ॥पूजार्थेपुष्पंसमर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ घंटामुद्रांप्रदर्श्य ॥ घंटानादंकुर्यात् ॥ अथध्यानं ॥ शांताकारंभुजगशयनंपद्मनाभंसुरेशं विश्वाधारंगगनसदृशंमेघवर्णंशुभांगं ॥ लक्ष्मीकांतंकमलनयनंयोगिभिर्ध्यानगम्यंवंदेविष्णुंभवभयहरंसर्वलोकैकनाथं ॥ १ ॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसं रत्नाकल्पोज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं ॥ पद्मासीनंसमंतात्स्तुतिममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं ॥ २ ॥ ध्येयःसदासवितृमंडलमध्यवर्तीनारायणः सरसिजासनसंनिविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुर्धृतशंखचक्रः ॥ ३॥ नमोदेव्यैमहादेव्यैशिवायैसततंनमः ॥ नमःप्रकृत्यैभद्रायैनियताःप्रणताःस्मतां ॥ ४ ॥ वक्रतुंडमहाकायसूर्यकोटिसमप्रभ ॥ निर्विघ्नंकुरुमेदेवसर्वकार्येषुसर्वदा ॥ ५ ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमोनमः ॥ ध्यायामि॥ ॐ सहस्रशीर्षापुरुषः ॥ सहस्राक्षःसहस्रपात् ॥ स

 



भूमिंविश्वतोवृत्वा ॥ अत्यतिष्ठद्दशांगुलं ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ आवाहनार्थेपु
ष्पांजलिं समर्पयामि ॥ पुरुषएवेदꣳसर्वं ॥ यद्भूतंयच्चभव्यं ॥ उतामृतत्वस्येशानः ॥ यदन्नेनातिरोहति ॥
श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ आसनार्थेअक्षताःसमर्पयामि ॥ एतावानस्यमहिमा ॥
अतोज्यायाꣳश्चपूरुषः ॥ पादोस्यविश्वाभूतानि ॥ त्रिपादस्यामृतंदिवि ॥ श्रीमहाविष्णुप्रमुखपंचायतन
देवताभ्योनमः ॥ पाद्यंसमर्पयामि ॥ त्रिपादूर्ध्वउदैत्पुरुषः ॥ पादोस्येहाभवात्पुनः ॥ ततोविष्वङ्व्यक्राम
त् ॥ साशनानशनेअभि ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ अर्घ्यंसमर्पयामि ॥ ॥
तस्माद्विराडजायत ॥ विराजोअधिपूरुषः ॥ सजातोअत्यरिच्यत ॥ पश्चाद्भूमिमथोपुरः ॥ श्रीमहाविष्णु
प्रमुखपंचायतनदेवताभ्योनमः ॥ आचमनीयंसमर्पयामि ॥ ॐयत्पुरुषेणहविषा ॥ देवायज्ञमतन्वत ॥
वसंतोअस्यासीदाज्यं ॥ ग्रीष्मइध्मःशरद्धविः ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ स्नानंसमर्प
यामि ॥ स्नानांतरेणआचमनीयंसमर्पयामि ॥ सप्तास्यासन्परिधयः ॥ त्रिःसप्तसमिधःकृताः ॥ देवायद्यज्ञं
तन्वानाः ॥ अबध्नन्पुरुषंपशुं ॥ मधुपर्कंनिवेदयामि ॥ दधिघृतंमधु ॥ मधुपर्कस्नानांतरेणआचमनीयंस ॥१७॥
मर्पयामि ॥ अथपंचामृतस्नानं ॥ ॐ आप्यायस्वसमेतुतेविश्वतः सोमवृष्णियं ॥ भवावाजस्यसंगथे॥ श्री

महाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ पयस्नानंसमर्पयामि॥पयस्नानांतरेणशुद्धोदकस्नानंसमर्पयामि ॥
शुद्धोदकस्नानांतरेणआचमनीयंसमर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि॥ ॐ दधिक्राव्णोअकारि
षंजिष्णोरश्वंस्यवाजिनंः॥ सुरभिनोमुखांकरत्प्रणआयूंषितारिषत्॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्यो
नमः दधिस्नानंसमर्पयामि ॥ दधिस्नानांतरेणशुद्धोदकस्नानंसमर्पयामि ॥ शुद्धोदकस्नानांतरेणआचमनीयंस
मर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि॥ॐ घृतंमिमिक्षिरेघृतमंस्ययोनिर्घृतेश्रितोघृतमुंवस्यधामं॥
अनुष्वधमावंहमादयंस्वस्वाहांकृतंवृषभवक्षिहव्यं ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ घृतस्ना
नंसमर्पयामि॥ घृतस्नानांतरेणशुद्धोदकस्नानंसमर्पयामि॥शुद्धोदकस्नानांतरेणआचमनीयंसमर्पयामि॥सकल
पूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ ॐ मधुवाताऋतायतेमधुंक्षरंतिसिंधंवः ॥ माध्वींर्नः संत्वोषधीः ॥ मधुनक्तमु
तोषसिमधुंमत्पार्थिवंरजंः ॥ मधुद्यौरंस्तुनः पिता ॥ मधुंमान्नोवनस्पतिर्मधुंमांअस्तुसूर्यः ॥ माध्वीर्गावोभ
वंतुनः ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ मधुस्नानंसमर्पयामि ॥ मधुस्नानांतरेणशुद्धोदकस्ना
नंसमर्पयामि ॥ शुद्धोदकस्नानांतरेणआचमनीयंसमर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥
त्वेक्रतुमपिंवृंजंतिविश्वेद्विर्यदेतेत्रिर्भवंत्यूमाः ॥ स्वादोः स्वादीयः स्वादुनासृजासमतंऊषुमधुमधुना॥भियो

धि ॥५॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः॥ शर्करास्नानंसमर्पयामि ॥ शर्करास्नानांतरेणशुद्धोदक



स्नानंसमर्पयामि ॥ शुद्धोदकस्नानांतरेणआचमनीयंसमर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥गं
 धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरीँ सर्वभूतानांतामिहोपह्वयेश्रियं॥श्रीमहाविष्णुप्रमुखपंचायत
नदेवताभ्योनमः ॥ षष्ठेनगंधोदकस्नानंसमर्पयामि॥ गंधोदकस्नानांतरेणशुद्धोदकस्नानंसमर्पयामि॥शुद्धोदक
स्नानांतरेणआचमनीयंसमर्पयामि ॥ सकलपूजार्थेगंधाक्षतपुष्पंसमर्पयामि ॥ श्रीमहाविष्णुप्रमुखपंचायतन
देवताभ्योनमः॥विलेपनार्थेचंदनंसमर्पयामि ॥ अलंकरणार्थेअक्षताःसमर्पयामि॥पूजार्थेपुष्पाणितुलसीपत्रा
णिबिल्वपत्राणिदूर्वांकुरांश्चऋतूद्भवानिपुष्पाणिसमर्पयामि॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥
धूपंसमर्पयामि ॥ श्रीम० प्र० पं० दे० नमः ॥ दीपंसमर्पयामि ॥ श्रीम० प्र० पं० दे० नमः ॥ नैवेद्यार्थेपं
चामृतशेषनैवेद्यंसमर्पयामि ॥ (अथवापयशर्करागुढ) ॥ ॐ प्राणायस्वाहा ॥ ॐ अपानायस्वाहा ॥
ॐ व्यानायस्वाहा ॐ उदानायस्वाहा॥ ॐ समानायस्वाहा ॥ ॐ ब्रह्मणेस्वाहा ॥ नैवेद्यमध्येपानीयंस
मर्पयामि ॥ ॐ प्राणायस्वाहा० ॥ ब्रह्मणेस्वाहा ॥ हस्तप्रक्षालनंसमर्पयामि ॥ मुखप्रक्षालनंसमर्प
यामि ॥ करोद्वर्तनार्थेचंदनंसमर्पयामि ॥ मुखवासार्थेपूगीफलतांबूलंसुवर्णपुष्पदक्षिणांसमर्पयामि ॥
श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥ प्रदक्षिणांसमर्पयामि ॥ नमस्कारात्समर्पयामि ॥ मं 
त्रपुष्पंसमर्पयामि ॥ अनेनयथाज्ञानेनकृतपूजनेनपूर्वाराधनेन श्रीमहाविष्णुःप्रीयतांनमम ॥ तत्सद्ब्रह्मा

पीणमस्तुउत्तरेनिर्माल्यंविसर्जयेत् ॥ अथाभिषेकः ॥ नमः सोमायचरुद्रायचनमस्ताम्रायचारुणाय
चनमः शंगायचपशुपतयेचनमउग्रायचभीमायचनमोअग्रेवधायचदूरेवधायचनमोहंत्रेचहनीयसेचनमोवृ
क्षेभ्योहरिकेशेभ्योनमस्तारायनमः शंभवेचमयोभवेचनमः शंकरायचमयस्करायचनमः शिवायचशिवतरा
यचनमस्तीर्थ्यायचकूल्यायचनमः पार्यायचावार्यायचनमः प्रतरणायचोत्तरणायचनमआतार्यायचाला
द्यायचनमः शष्प्यायचफेन्यायचनमःसिकत्यायचप्रवाह्यायच ॥८॥ शंचमेमयश्चमेप्रियंचमेनुकामश्चमेका
मश्चमेसौमनसश्चमेभद्रंचमेश्रेयश्चमेवस्यश्चमेयशश्चमेभगश्चमेद्रविणंचमेयंताचमेधर्ताचमेक्षेमश्चमेधृतिश्चमे
विश्वंचमेमहश्चमेसंविच्चमेज्ञात्रंचमेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमेयक्ष्मंचमेनामयच्चमेजी
वातुश्चमेदीर्घायुत्वंचमेनमित्रंचमेभयंचमेसुगंचमेशयनंचमेसूषाचमेसुदिनंचमे ॥ ३ ॥ अतोदेवाअवंतुनोय
तोविष्णुर्विचक्रमे ॥ पृथिव्याः सप्तधामभिः ॥ इदंविष्णुर्विचक्रमे त्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥
त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः ॥ अतोधर्माणिधारयन् ॥ विष्णोः कर्माणिपश्यतयतोव्रतानिपस्प
शे ॥ इंद्रस्ययुज्यःसखा ॥ तद्विष्णोःपरमंपदं सदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं ॥ तद्विप्रासोविप
न्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंपदं ॥ देवस्यत्वासवितुः प्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्याम

 भ्रेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रियेणाभिषिंचामि ॥ बलायश्रियैयशसेन्नाद्याय ॥ भूर्भुवः सुवः अमृताभिषे 
कोस्तुशांतिः पुष्टिः स्तुष्टिश्चास्तु ॥ हरों ॥ हरों ॥ हरों ॥ हरहरमहादेव ॥ श्रीमहाविष्णुप्रमुखपंचायतन
 देवताभ्योनमः ॥ अभिषेकस्नानंसमर्पयामि ॥ अभिषेकस्नानांतरेणआचमनीयंसमर्पयामि ॥ नर्यप्रजांमे
गोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ सुप्रतिष्ठितमस्तु ॥ तं
यज्ञंबर्हिषिप्रौक्षन्न ॥ पुरुषंजातमग्रतः ॥ तेनदेवाअयजंत ॥ साध्याऋषयश्चये ॥ श्रीमहाविष्णुप्र० पं० दे०
नमःवस्त्रार्थेतुलसीपत्रंसमर्पयामि ॥ तस्माद्यज्ञात्सर्वहुतः ॥ संभृतंपृषदाज्यं ॥ पशूꣳस्ताꣳश्चक्रे वायव्या
नू ॥ आरण्यान्ग्राम्याश्चये ॥ श्रीम० प्र० पं० दे० नमः उपवस्त्रार्थेयज्ञोपवीतंसमर्पयामि ॥ ( अथवातुल
सीपत्रंस० ) ॥ वस्त्रोपवस्त्रांतरेणआचमनीयंसमर्पयामि ॥ तस्माद्यज्ञात्सर्वहुतः ॥ ऋचः सामानिजज्ञिरे ॥
छंदाꣳसिजज्ञिरेतस्मात् ॥ यजुस्तस्मादजायत ॥ श्रीमहाविष्णुप्र० पं० दे० नमःविलेपनार्थेचंदनंसमर्पया
मि ॥ श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं ॥ विलेपनंसुरश्रेष्ठ चंदनंप्रतिगृह्यतां ॥ गंधद्वारांदुराधर्षांनित्यपु
ष्टांकरीषिणीं ॥ ईश्वरीꣳ सर्वभूतानांतामिहोपह्वयेश्रियं ॥ अक्षताश्चसुरश्रेष्टाः कुंकुमाक्ताः सुशोभिताः ॥ 
मयानिवेदिताभक्त्यागृहाणपरमेश्वर ॥ श्रीमहा० प्र० पं० दे० नमः ॥ अलंकरणार्थेअक्षताः समर्पयामि ॥
तस्मादश्वाअजायंत ॥ येकेचोभयादतः ॥ गावोहजज्ञिरेतस्मात् ॥ तस्माज्जाताअजावयः ॥ माल्यादीनि

सुगंधीनिमालत्यादीनिवैप्रभो ॥ मयाहृतानिपूजार्थंपुष्पाणिप्रतिगृह्यतां ॥ १ ॥ करवीरैर्जातिकुसुमैश्चंपकैर्ब
कुलैः शुभैः ॥ शतपत्रैश्चकल्हारैरर्चयेत्परमेश्वर ॥२ ॥ श्रीमहाविष्णुप्र ० पं ० दे ० नमः ॥ पूजार्थंकालोद्भवपु
ष्पाणिसमर्पयामि ॥ श्रीमहाविष्णु ० प्र ० पं ० दे ० नमः ॥ हरिद्राकुंकुमंपारिमलद्रव्यंसमर्पयामि ॥ केशवा
दिचतुर्विंशतिनामभिः तुलसीपत्राणिसमर्पयामि ॥ त्रिदलंत्रिगुणाकारंत्रिनेत्रंचत्रियायुधं ॥ त्रिजन्मपापसं
हारंएकबिल्वंशिवार्पणं ॥ ३ ॥ यत्पुरुषंव्यदधुः ॥ कतिधाव्यकल्पयन् ॥ मुखंकिमस्यकौबाहू ॥ कावूरू
पादावुच्येते ॥ धूरसिधूर्वधूर्वंतंधूर्वतंयोस्मान्धूर्वतितं ॥ धूर्वयंवयंधूर्वामः ॥ वनस्पतिरसोद्भूतोगंधाढ्योगंधउत्त
मः ॥ आघ्रेयः सर्वदेवानांधूपोयंप्रतिगृह्यतां ॥ श्रीमहाविष्णु प्र ० पं ० दे ० नमः ॥ धूपंसमर्पयामि ॥ ब्राह्म
णोस्यमुखमासीत् ॥ बाहूराजन्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः ॥ पद्भ्याꣳ शूद्रोअजायत ॥ आज्यंचवर्ति
संयुक्तंवन्हियायोजितंमया ॥ दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ॥ भक्त्यादीपंप्रयच्छामिदेवायपरमात्म
ने ॥ त्राहिमांनिरयाद्घोराद्दीपोयंप्रतिगृह्यतां ॥ उद्दीप्यस्वजातवेदोपघ्नंनिर्ऋतिंमम ॥ पशूꣳश्चमह्यमावहजी
वनंचदिशोदिश ॥ श्रीम ० प्र ० पं ० दे ० नमः दीपंसमर्पयामि ॥ चंद्रमामनसोजातः ॥ चक्षोः सूर्योअजायत
॥ मुखादिंद्रश्चाग्निश्च ॥ प्राणाद्वायुरजायत ॥ नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ॥ ईप्सितंमेवरंदेहिपर
त्रचपरांगतिं ॥ शर्कराखंडखाद्यानिदधिक्षीरघृतानिच ॥ आहारंभक्ष्यभोज्यंचनैवेद्यंप्रतिगृह्यतां ॥ श्रीम ०

हि० ब्र० प्र० पं० दे० नमः नैवेद्यार्थेपयशर्करानैवेद्यंसमर्पयामि ॥ नैवेद्यात्पूर्वंआचमनीयंस० अमृतोपस्तरणमसि ॥ दे० पू०
ॐ प्राणायस्वाहा ॥ ॐ अपानायस्वाहा ॥ ॐ व्यानायस्वाहा ॥ ॐ उदानायस्वाहा ॥ ॐसमानायस्वा
२० ॥ हा ॥ ॐ ब्रह्मणेस्वाहा ॥ नैवेद्यमध्येपानीयंसमर्पयामि ॥ ॐ प्राणायस्वाहा ॥ ॐ अपा० ब्रह्मणेस्वाहा ॥
उत्तरापोशनंसमर्पयामि ॥ हस्तप्रक्षालनंसमर्पयामि ॥ मुखप्रक्षालनंसमर्पयामि ॥ करोद्वर्तनार्थेचंदनंस
मर्पयामि ॥ मुखवासार्थेपूगीफलतांबूलसुवर्णपुष्पदक्षिणाः समर्पयामि ॥ पूगीफलंमहद्दिव्यंनागवल्लीद
लैर्युतं ॥ कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां ॥ श्रीमहा० वि० प्र० पं० दे० नमः ॥ नाभ्याआसीदंतरिक्षं ॥
शीर्ष्णोद्यौः समवर्तत ॥ पद्भ्यांभूमिर्दिशः श्रोतात् ॥ तथालोकाँ अकल्पयन् ॥ तांबूलंसमर्पयामि ॥ वे
दाहमेतंपुरुषंमहांतं ॥ आदित्यवर्णंतमसस्तुपारे ॥ सर्वाणिरूपाणिविचित्यधीरः ॥ नामानिकृत्वाभिवदन्य
दास्ते ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनंतपुण्यफलदमतः शांतिंप्रयच्छमे ॥ श्रीमहावि
ष्णु प्र० पं० दे० नमःसुवर्णपुष्पदक्षिणांसमर्पयामि ॥ धातापुरस्ताद्यमुदाजहार ॥ शक्रः प्रविद्वान्प्रदिशश्च
तस्रः ॥ तमेवंविद्वानमृतइहभवति ॥ नान्यः पंथाअयनायविद्यते ॥ फलेनफलितंसर्वंत्रैलोक्यंसचराचरं ॥
तस्मात्फलप्रदानेनसफलाश्चमनोरथाः ॥ श्रीमहाविष्णु प्र० पं० दे० नमः नारिकेलफलंसमर्पयामि ॥ ॥ २० ॥
( अथवा ) ॥ कालोद्भवफलंसमर्पयामि ॥ अधिकफलावाप्त्यर्थंकर्पूरनीराजनदीपंसमर्पयामि ॥ श्रियेजा

तः श्रियआनिरियायश्रियंवयोंजरितृभ्योंदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥
श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ कर्पूरगौरंकरुणाव
तारंसंसारसारंभुजगेंद्रहारं ॥ सदावसंतंहृदयारविंदेभवंभवानीसहितंनमामि ॥ १ ॥ आरत्याह्मणाव्या ॥
॥ अन्यथाशरणंनास्तित्वमेवशरणंमम ॥ तस्मात्कारुण्यभावेनरक्षरक्षपरमेश्वर ॥ श्रीमहावि० प्र० पं० दे०
नमः ॥ नमस्कारान्समर्पयामि ॥ यानिकानिचपापानिजन्मांतरकृतानिच ॥ तानितानिविनश्यंतिप्रदक्षिणपदे
पदे ॥ श्रीमहाविष्णुप्रं० पं० दे० नमः प्रदक्षिणाःसमर्पयामि ॥ यज्ञेनंयज्ञमयजंतदेवाः ॥ तानिधर्माणिप्रथ
मान्यासन् ॥ तेहनाकंमहिमानः सचंते ॥ यत्रपूर्वेसाध्याः संतिदेवाः ॥ ॐ राजाधिराजायप्रस
ह्यसाहिने ॥ नमोवयंवैश्रवणायकुर्महे ॥ समेकामान्कामकामायमह्यं ॥ कामेश्वरोवैश्रवणोददातु ॥
कुबेरायवैश्रवणाय ॥ महाराजायनमः ॥ ॐ स्वस्तिसाम्राज्यंभौज्यं ॥ स्वाराज्यंवैराज्यं ॥ पा
रमेष्ठ्यंराज्यं ॥ माहाराज्यमाधिपत्यमयं ॥ समंतपर्यायीस्यात् ॥ सार्वभौमः सार्वायुषः ॥ आं
तादापरार्द्धात् ॥ पृथिव्यैसमुद्रपर्यंतायाएकराळिति ॥ तदप्येषश्लोकोभिगीतोमरुतः परिवेष्टारो
मरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाः सभासदइति ॥ योवैतांब्रह्मणोवेद ॥ अमृते
नावृतांपुरीं ॥ तस्मैब्रह्मचब्रह्माच ॥ आयुःकीर्तिंप्रजांददुः ॥ श्रीमहाविष्णुप्रमुखपंचायतनदेवताभ्योनमः ॥

मंत्रपुष्पंसमर्पयामि ॥ नमस्करोमि ॥ गतंदुःखंगतंपापंगतंदारिद्र्यमेवच ॥ आगतासुखसंपत्तिःपुण्योहंत
वदर्शनात् ॥ आवाहनंनजानामिनजानामितवार्चनं ॥ पूजांचैवनजानामिक्षम्यतांपरमेश्वर ॥ मंत्रहीनंक्रि

याहीनंभक्तिहीनंसुरेश्वर ॥ यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे ॥ नमोदेवेभ्यःआसनाद्यत्रगंधपत्रपुष्पधूपदीप
नैवेद्यफलतांबूलदक्षिणाप्रदक्षिणापूर्वाराधनेनउत्तराराधनेनतेनश्रीभगवान्परमेश्वरःप्रीयतांनमम॥तत्सद्ब्रह्मा
र्पणमस्तु ॥कलशशंखघंटाधूपदीपस्थावरदीपदेवताभ्योनमः ॥विलेपनार्थेचंदनंसमर्पयामि॥अलंकरणार्थेअ
क्षताःसमर्पयामि ॥ पूजार्थेपुष्पाणिसमर्पयामि॥धूपंसमर्पयामि॥ दीपंसमर्पयामि ॥ कलशादिसमस्तदेवता॰
नैवेद्यार्थेपयशर्करानैवेद्यंसमर्पयामि ॥ अमृतोपस्तरणमसि ॥ ॐप्राणायस्वाहा ॥ ॐअपानायस्वाहा ॥ ॐव्या
नायस्वाहा ॥ ॐउदानायस्वाहा ॥ ॐसमानायस्वाहा ॥ ॐब्रह्मणेस्वाहा ॥ नैवेद्यमध्येपानीयंसमर्पयामि॥
ॐप्राणायस्वा॰ब्रह्मणेस्वाहा ॥ कलशादिसमस्तदेताभ्योनमः ॥ मंत्रपुष्पंसमर्पयामि ॥ संखमध्येस्थितंतो
यंभ्रामितंकेशवोपरि ॥ अंगलग्नंमनुष्याणांब्रह्महत्यांव्यपोहतु ॥ १॥ अकालमृत्युहरणंसर्वव्याधिविनाश
नं ॥ विष्णुपादोदकंतीर्थंजठरेधारयाम्यहं ॥ २ ॥ बाणरावणचंडीशनंदीभृंगीजटादयः ॥ सदाशिवप्रसादे
नसर्वेगृण्हंतुशांभवाः ॥ ३ ॥ अपराधसहस्राणिक्रियंतेहर्निशंमया ॥ दासोहमितिमांभक्त्यागृहाणप
रमेश्वर ॥ इतिप्रार्थनांसमर्पयामि ॥ अनेनयथाज्ञानेनकृतपूजनेनश्रीभगवान्परमेश्वरःप्रीयतां ॥ 

## ॥ १० ॥ अथ रुद्रप्रारंभः ॥

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥ हरिःॐ ॥ इडादेवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानिशꣳसिषद्विश्वेदेवाः सूक्तवाचः पृथिविमातर्मामाहिꣳसीर्मधुमनिष्येमधुंजनिष्येमधुवक्ष्यामिमधुवादिष्यामिमधुमतींदेवेभ्योवाचमुद्यासꣳशुश्रूषेण्यांमनुष्येभ्यस्तंमादेवाअवंतुशोभायैपितरोनुमदंतु ॥ ॐꣳशांतिःशांतिःशांतिः ॥ हरिः ॐ म् ॥ नमस्तेरुद्रमन्यवउतोतइषवेनमः ॥ नमस्तेअस्तुधन्वनेबाहुभ्यामुततेनमः ॥ यातइषुःशिवतमाशिवंबभूवतेधनुः ॥ शिवाशरव्यायातवतयानोरुद्रमृडय ॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानःस्तनुवाशंतमयागिरिशंताभिचाकशीहि ॥ यामिषुंगिरिशंतहस्तेबिभर्ष्यस्तवे ॥ शिवांगिरित्रतांकुरुमाहिꣳसीःपुरुषंजगत् ॥ शिवेनवचसात्वागिरिशाच्छावदामसि ॥ यथानःसर्वमिज्जगदयक्ष्मꣳसुमनाअसत् ॥ अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहीꣳश्चसर्वाञ्जंभयन्त्सर्वाश्चयातुधान्यः ॥ असौयस्ताम्रोअरुणउतबभ्रुः सुमंगलः ॥ येचेमाꣳरुद्राअभितोदिक्षुश्रिताः सहस्रशोवैषाꣳहेडईमहे ॥ असौयोवसर्पतिनीलग्रीवोविलोहितः ॥ उतैनंगोपाअदृशन्नदृशन्नुदहार्यः ॥ उतैनंविश्वाभूतानिसदृष्टोमृडयातिनः ॥ नमोअस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेअस्यसत्वानोहंतेभ्योकरंनमः ॥ प्रमुंचधन्वनस्त्व

मुभयोरार्त्निंयोर्ज्या ॥ याश्चंतेहस्तइषंवः पराताभगवोवप॥ अवतत्यधनुस्त्व᳚सहस्राक्षशतेषुधे ॥ निशीर्य
शल्यानांमुखांशिवोनंःसुमनाभव ॥ विज्यंधनुंःकपर्दिनोविशंल्योबाणंवा᳚उत ॥ अनेशन्नस्येषंवआभुरंस्य
॥ २२ ॥ निषंगर्थिः ॥ यातेंहेतिर्मींढुष्टमहस्तेबभूवंतेधनुंः ॥ तयास्मान्विश्वतस्त्वमंयक्ष्मयापरिंभ्भुज ॥ नमस्तेअस्त्वा
युधायानांततायधृष्णवें ॥ उभाभ्यामुततेनमोंबाहुभ्यांतवधन्वंने ॥ पीरंतेधन्वंनोहेतिरस्मान्वृंणक्तुविश्वतंः ॥
अथोयइषुधिस्तवारे अस्मन्निधेहितं ॥ १ ॥ नमोहिरंण्यबाहवेसेनान्येंदिशांचपतंयेनमोनमोंवृक्षेभ्योहरिंके
शेभ्यः पशूनांपतंयेनमोनमंःसस्पिंजरायत्विषीमतेपथीनांपतंयेनमोनमोंबभ्लुशायंविव्याधिनेन्नांनांपतंयेनमो
नमोहरिंकेशायोपवीतिनेंपुष्टानांपतंयेनमोनमोंभवस्यंहेत्यैजगंतांपतंयेनमोनमोंरुद्रायांतताविनेक्षेत्राणांपतंये
नमोनमंःसूतायाहंत्यायवनांनांपतंयेनमोनमोरोहिंतायस्थपतंयेवृक्षाणांपतंयेनमोनमोंमंत्रिणेंवाणिजायकक्षा
णांपतंयेनमोनमोंभुवंतयेंवारिवस्कृतायौषंधीनांपतंयेनमोनमंउच्चैर्घोषायाक्रंदयंतेपत्तीनांपतंयेनमोनमंः कृत्स्न
वीतायधावंतेसत्वंनांपतंयेनमंः ॥ २ ॥ नमंः सहंमानायनिव्याधिनंआव्याधिनींनांपतंयेनमोनमंः ककुभायं ॥ २२ ॥
निषंगिणेंस्तेनानांपतंयेनमोनमोंनिषंगिणइषुधिमतेतस्कंराणांपतंयेनमोनमोवंचंतेपरिवंचंतेस्तायूनांपतंयेन

मोनमोनिचेरवेपरिचरायारण्यानांपतयेनमोनमःसृकाविभ्योजिघांसद्भ्योमुष्णतांपतयेनमोनमोऽसिमद्भ्योनक्तं
चरद्भ्यः प्रकृन्तानांपतयेनमोनमउष्णीषिणेगिरिचरायकुलुञ्चानांपतयेनमोनमइषुमद्भ्योधन्वाविभ्यश्चवोनमो
नमआतन्वानेभ्यः प्रतिदधानेभ्यश्चवोनमोनमआयच्छद्भ्योविसृजद्भ्यश्चवोनमोनमोऽस्यद्भ्योविध्यद्भ्यश्चवोन
मोनमआसीनेभ्यः शयानेभ्यश्चवोनमोनमःस्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमोनमः
सभाभ्यः सभापतिभ्यश्चवोनमोनमोअश्वेभ्योऽश्वपतिभ्यश्चवोनमः ॥३॥ नमआव्याधिनीभ्योविविध्यन्तीभ्यश्च
वोनमोनमउगणाभ्यस्तृंहतीभ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपतिभ्यश्च
वोनमोनमोगणेभ्योगणपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोनमोनमोमहद्भ्यःक्षुल्लकेभ्यश्चवोन
मोनमोरथिभ्योऽरथेभ्यश्चवोनमोनमोरथेभ्योरथपतिभ्यश्चवोनमोनमः सेनाभ्यः सेनानिभ्यश्चवोनमोनमः क्ष
तृभ्यःसंग्रहीतृभ्यश्चवोनमोनमस्तक्षभ्योरथकारेभ्यश्चवोनमोनमःकुलालेभ्यःकर्मारेभ्यश्चवोनमोनमः पुंजिष्टे
भ्योनिषादेभ्यश्चवोनमोनमइषुकृद्भ्योधन्वकृद्भ्यश्चवोनमोनमोमृगयुभ्यःश्वनिभ्यश्चवोनमोनमः श्वभ्यः श्वप
तिभ्यश्चवोनमः ॥ ४ ॥ नमोभवायचरुद्रायचनमः शर्वायचपशुपतयेचनमोनीलग्रीवायचशितिकं
ठायचनमःकपर्दिनेचव्युप्तकेशायचनमःसहस्राक्षायचशतधन्वनेचनमोगिरिशायचशिपिविष्टायचनमोमीढु

॥ २३ ॥ ष्टमाय चेषुमते च नमो ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च नमो वृद्धाय च संवृध्वने च नमो अग्रियाय च
प्रथमाय च नम आशवे चाजिराय च नमः शीघ्रियाय च शीभ्याय च नम ऊर्म्याय चावस्वन्याय च नमः स्रोतस्याय च
द्वीप्याय च ॥ ५॥ नमो ज्येष्ठाय च कनिष्ठाय च नमः पूर्वजाय चापरजाय च नमो मध्यमाय चापगल्भाय च नमो ज
घन्याय च बुध्नियाय च नमः सोभ्याय च प्रतिसर्याय च नमो याम्याय च क्षेम्याय च नम उर्वर्याय च खल्याय च नमः श्लो
क्याय चावसान्याय च नमो वन्याय च कक्ष्याय च नमः श्रवाय च प्रतिश्रवाय च नम आशुषेणाय चाशुरथाय च नमः
शूराय चावभिंदते च नमो वर्मिणे च वरूथिने च नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥६॥ नमो
दुंदुभ्याय चाहनन्याय च नमो धृष्णवे च प्रमृशाय च नमो दूताय च प्रहिताय च नमो निषंगिणे चेषुधिमते च नमस्ती
क्ष्णेषवे चायुधिने च नमः स्वायुधाय च सुधन्वने च नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय
च सरस्याय च नमो नाद्याय च वैशंताय च नमः कूप्याय चावट्याय च नमो वर्ष्याय चावर्ष्याय च नमो मेघ्याय च वि
द्युत्याय च नम ईध्रियाय चातप्याय च नमो वात्याय च रेष्मियाय च नमो वास्तव्याय च वास्तुपाय च ॥ ७ ॥ नमः
सोमाय च रुद्राय च नमस्ताम्राय चारुणाय च नमः शंगाय च पशुपतये च नम उग्राय च भीमाय च नमो अग्रेवधाय ॥ २३ ॥
च दूरेवधाय च नमो हंत्रे च हनीयसे च नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शंभवे च मयोभवे च नमः शंकराय

चमयस्करायचनमः शिवायचशिवतरायचनमस्तीर्थ्यायचकूल्यायचनमः पार्यायचावार्यायचनमःप्रतरणाय
चोत्तरणायचनमआतार्यायचालाद्यायचनमःशष्प्यायचफेन्यायचनमःसिकत्यायचप्रवाह्यायच ॥ ८ ॥
नमइरिण्यायचप्रपथ्यायचनमःकिꣳशिलायचक्षयणायचनमःकपर्दिनेचपुलस्तयेचनमोगोष्ठ्यायचगृह्याय
चनमस्तल्प्यायचगेह्यायचनमःकाट्यायचगह्वरेष्ठायचनमोह्रदय्यायचनिवेष्प्यायचनमःपाꣳसव्यायचरज
स्यायचनमः शुष्क्यायचहरित्यायचनमोलोप्यायचोलप्यायचनमऊर्व्यायचसूर्म्यायचनमःपर्ण्यायचपर्णश
द्यायचनमोपगुरमाणायचाभिघ्नतेचनमआख्खिदतेचप्रख्खिदतेचनमोवःकिरिकेभ्योदेवानाꣳ हृदयेभ्योन
मोविक्षीणकेभ्योनमोविचिन्वत्केभ्योनमआनिर्हतेभ्योनमआमीवत्केभ्यः ॥ ९ ॥ द्रापेअंधसस्पतेदरिद्र
नीललोहित ॥ एषांपुरुषाणामेषांपशूनांमाभेर्मारोमोएषांकिंचनाममत् ॥ यातेरुद्रशिबातनूःशिवाविश्वा
हभेषजी ॥ शिवारुद्रस्यभेषजीतयानोमृडजीवसे ॥ इमाꣳरुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेम
तिं ॥ यथानःशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मिन्ननातुरं ॥ मृडानोरुद्रोतनोमयस्कृधिक्षयद्वीराय
नमसाविधेमते ॥ यच्छंचयोश्चमनुरायजेपितातदश्यामतवरुद्रप्रणीतौ ॥ मानोमहांतमुतमानोअर्भकंमा
नउक्षंतमुतमानउक्षितं ॥ मानोवधीःपितरंमोतमातरंप्रियामानस्तनुवोरुद्ररीरिषः ॥ मानस्तोकेतनयेमा

नआयुषिमानोगोषुमानोअश्वेषुरीरिषः ॥ वीरान्मानोरुद्रभामितोवधीर्हविष्मंतोनमसाविधेमते ॥ आरा
त्तेगोघ्नउतपूरुषघ्नेक्षयद्वीरायसुम्नमस्मेतेअस्तु ॥ रक्षाचनोअधिचदेवब्रूह्यधाचनःशर्मयच्छद्विबर्हाःस्तुहिश्रु
॥ २४ ॥ तंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृडाजरित्रेरुद्रस्तवानोअन्यंतेअस्मन्निवपंतुसेनाः ॥ परि
णोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृडय ॥
मीढुष्टमशिवतमशिवोनः सुमनाभव ॥ परमेवृक्षआयुधंनिधायकृत्तिंवसानआचरपिनाकंबिभ्रदागहि ॥ विकि
रिदविलोहितनमस्तेअस्तुभगवः ॥ यास्तेसहस्रꣳहेतयोन्यमस्मन्निवपंतुताः ॥ सहस्राणिसहस्रधाबाहुवोस्त
वहेतयः ॥ तासामीशानोभगवः पराचीनामुखाकृधि ॥ १० ॥ सहस्राणिसहस्रशोयेरुद्राअधिभूम्यां ॥
तेषाꣳसहस्रयोजनेवधन्वानितन्मसि ॥ अस्मिन्महत्यर्णवेंतरिक्षेभवाअधि ॥ नीलग्रीवाः शितिकंठाः श
र्वाअधः क्षमाचराः ॥ नीलग्रीवाःशितिकंठादिवꣳरुद्राउपश्रिताः ॥ येवृक्षेषुसस्पिंजरानीलग्रीवाविलोहिताः ॥
येभूतानामधिपतयोविशिखासःकपर्दिनः ॥ येअन्नेषुविविध्यंतिपात्रेषुपिबतोजनान् ॥ येपथांपथिरक्षयऐलबृदा ॥ २४ ॥
यव्युधः ॥ येतीर्थानिप्रचरंतिसृकावंतोनिषंगिणः ॥ यएतावंतश्चभूयाꣳसश्चदिशोरुद्रावितस्थिरे ॥ तेषाꣳसहस्र

योजनेवधन्वानितन्मासि ॥ नमोरुद्रेभ्योयेपृथिव्यांयेन्तरिक्षेयेदिवियेषामन्नंवातोवर्षमिषवस्तेभ्योदशप्राचीर्दश
दक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्योनमस्तेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितंवोजम्भेदधामि ॥ ११ ॥
ॐ अग्नाविष्णूसजोषसेमावर्धन्तुवांगिरः ॥ द्युम्नैर्वाजेभिरागतं ॥ वाजश्चमेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधी
तिश्चमेक्रतुश्चमेस्वरश्चमेश्लोकश्चमेश्रावश्चमेश्रुतिश्चमेज्योतिश्चमेसुवश्चमेप्राणश्चमेपानश्चमेव्यानश्चमेसुश्च
मेचित्तंचमआधीतंचमेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रंचमेदक्षश्चमेबलंचमओजश्चमेसहश्चमआयुश्चमेजरा
चमआत्माचमेतनूश्चमेशर्मचमेवर्मचमेङ्गानिचमेस्थानिचमेपरूꣳषिचमेशरीराणिचमे ॥ १ ॥ ज्यैष्ठ्यंचमआ
धिपत्यंचमेमन्युश्चमेभामश्चमेमश्चमेम्भश्चमेजेमाचमेमहिमाचमेवरिमाचमेप्रथिमाचमेवर्ष्माचमेद्राघुयाचमे
वृद्धंचमेवृद्धिश्चमेसत्यंचमेश्रद्धाचमेजगच्चमेधनंचमेवशश्चमेत्विषिश्चमेक्रीडाचमेमोदश्चमेजातंचमेजनिष्य
माणंचमेसूक्तंचमेसुकृतंचमेवित्तंचमेवेद्यंचमेभूतंचमेभविष्यच्चमेसुगंचमेसुपथंचमऋद्धंचमऋद्धिश्चमेक्लृप्तं
चमेक्लृप्तिश्चमेमतिश्चमेसुमतिश्चमे ॥ २ ॥ शंचमेमयश्चमेप्रियंचमेनुकामश्चमेकामश्चमेसौमनसश्चमेभद्रंच
मेश्रेयश्चमेवस्यश्चमेयशश्चमेभगश्चमेद्रविणंचमेयन्ताचमेधर्ताचमेक्षेमश्चमेधृतिश्चमेविश्वंचमेमहश्चमेसंविच्च
मेज्ञात्रंचमेसूश्चमेप्रसूश्चमेसीरंचमेलयश्चमऋतंचमेमृतंचमेयक्ष्मंचमेनामयच्चमेजीवातुश्चमेदीर्घायुत्वंचमेनमि

हि०ब्र० मशांत्यर्थंदुरितक्षयकारकाइति ॥ उत्तरकलशेअक्षतान्क्षिपेत् ॥ मातृदेवोभव ॥ पितृदेवोभव ॥ आचार्यदेवो पु०ह०
भव ॥ अतिथिदेवोभव ॥ सर्वेभ्योदेवेभ्यःसर्वेभ्योब्राह्मणेभ्योनमोनमः ॥ अवनिकृतजानुमंडलःकमलमु
॥११३॥ कुलसदृशमंजलिंशिरस्याधायदक्षिणेनपाणिनासुवर्णपूर्णकलशंधारयित्वाऽऽशिषःप्रार्थयंते ॥ प्रार्थनामाह ॥
एताःसत्याआशिषःसंतु ॥ दीर्घानागानद्योगिरयस्त्रीणिविष्णुपदानि चतेनायुःप्रमाणेनपुण्याहंदीर्घमायुरस्तु ॥
शिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनीयं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्ष
तमरिष्टंच ॥ गंधाःपांतु ॥ सौमंगल्यंचास्तु ॥ अक्षताःपांतु ॥ आयुष्यमस्तु ॥ पुष्पाणिपांतु ॥ सौश्रिय
मस्तु ॥ तांबूलानिपांतु ॥ ऐश्वर्यमस्तु ॥ दक्षिणाःपांतु ॥ बहुदेयंचास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तु
ष्टिश्चास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्च ॥ श्रीर्यशोविद्याविनयोवित्तंबहुपुत्रंचायुष्यंचास्तु ॥ सर्वत्र
ब्राह्मणैरस्त्वितिप्रत्युत्तरंदेयं ॥ यंकृत्वासर्ववेदयज्ञक्रियाकरणकर्मारंभाःशुभाःशोभनाःप्रवर्तंते ॥ तमहमों
कारमादिंकृत्वा ॥ ऋग्यजुःसामाशीर्वचनंबह्वृषिसंमतंसंविज्ञातंभवद्भिरनुज्ञातःपुण्यंपुण्याहंवाचयिष्ये ॥
वाच्यतामितिविप्रावदेयुः ॥ उत्तरत्रयथायोग्यं ॥ यजमानः ॥ भद्रंकर्णेभिःशृणुयामदेवाः ॥ भद्रंपश्येमाक्ष
भिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाꣳसस्तनूभिः ॥ व्यशेमदेवहितंयदायुः ॥ द्रविणोदाद्रविणसस्तुरस्यद्राविणो ॥११३॥
दाःसनरस्यप्रयंसत् ॥ द्रविणोदावीरवतीमिषन्नोद्रविणोदारासतेदीर्घमायुः ॥ सवितापश्चातात्सवितापुरस्ता

त्सवितोत्तरात्तात्सविताधरात्तात् ॥ सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥ नवोनवो भवति जायमानोन्हां केतुरुषसामेत्यग्रे ॥ भागं देवेभ्यो विदधात्यायन्प्रचंद्रमास्तिरति दीर्घमायुः ॥ उच्चा दिवि दक्षिणावंतो अस्थुर्ये अश्वदाः सह ते सूर्येण ॥ हिरण्यदा अमृतत्वं भजंते वासोदाः सोम प्रतिरंत आयुः ॥ आपं उंदंतु जीवसे दीर्घायुत्वाय वर्चसे ॥ यस्त्वा हृदा कीरिणा मन्यमानोमर्त्यं मर्त्यो जोहवीमि ॥ जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यां ॥ यस्मैत्व ँ सुकृते जातवेद उलोकमग्ने कृणवः स्योनं ॥ अश्विन ँ सपुत्रिणं वीरवंतं गोमंत ँ रयिं नंशते स्वस्ति ॥ संत्वा सिंचामि यजुषा प्रजामायुर्धनं च ॥ व्रतनियमतपःस्वाध्यायक्रतुदमदानविशिष्टानां ब्राह्मणानां मनः समाधीयतां ॥ विप्राः समाहितमनसः स्मः ॥ यजमानः ॥ प्रसीदंतु भवंतः ॥ विप्राः प्रसन्नाः स्मः ॥ यजमानः ॥ शांतिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ शिवं कर्मास्तु ॥ कर्मसमृद्धिरस्तु ॥ धर्मसमृद्धिरस्तु ॥ वेदसमृद्धिरस्तु ॥ शास्त्रसमृद्धिरस्तु ॥ पुत्रसमृद्धिरस्तु ॥ धनधान्यसमृद्धिरस्तु ॥ इष्टसंपदस्तु ॥ वाक्यद्वयेन बहिर्देशे अपः क्षिपेत् ॥ अरिष्टनिरसनमस्तु ॥ यत्पापं तत्प्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ उत्तरे कर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराः क्रियाः शुभाः शोभनाः संपद्यंतां ॥ तिथिकरणमुहूर्तनक्षत्रसंपदस्तु ॥

हि॰ ब्र॰ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताःप्रीयंतां ॥ तिथिकरणेमुहूर्तनक्षत्रेसग्रहेसदैवतेप्रीयेतां ॥ दुर्गापांचा पु॰ ह॰
ल्यौप्रीयेतां ॥ अग्निपुरोगाविश्वेदेवाःप्रीयंतां ॥ इंद्रपुरोगामरुद्गणाःप्रीयंतां ॥ ब्रह्मपुरोगाःसर्वेवेदाःप्रीयंतां॥
॥११४॥ विष्णुपुरोगाःसर्वेदेवाःप्रीयंतां ॥ माहेश्वरीपुरोगाउमामातरःप्रीयंतां ॥ वसिष्ठपुरोगाऋषिगणाःप्रीयंतां ॥
अरुंधतीपुरोगाएकपत्न्यःप्रीयंतां ॥ ऋषयश्छंदांस्याचार्यावेदादेवायज्ञाश्चप्रीयंतां ॥ ब्रह्मचब्राह्मणाश्चप्री
यंतां ॥ श्रीसरस्वत्यौप्रीयेतां ॥ श्रद्धामेधेप्रीयेतां ॥ भगवतीकात्यायनीप्रीयतां ॥ भगवतीमाहेश्वरीप्रीयतां ॥
भगवतीपुष्टिकरीप्रीयतां ॥ भगवतीतुष्टिकरीप्रीयतां ॥ भगवतीऋद्धिकरीप्रीयतां ॥ भगवतीवृद्धिकरीप्रीय
तां ॥ भगवंतौविघ्नविनायकौप्रीयेतां ॥ भगवान्त्स्वामीमहासेनःसपत्नीकःससुतःसपार्षदःसर्वस्थानगतःप्रीय
तां॥हरिहराहिरण्यगर्भाःप्रीयंतां ॥सर्वाग्रामदेवताःप्रीयंतां ॥ सर्वाःकुलदेवताःप्रीयंतां ॥ सर्वावास्तुदेवताःप्रीयं
तां ॥ सप्तभिर्वाक्यैर्बहिरपःक्षिपेत् ॥ हताब्रह्मद्विषः ॥ हताःपरिपंथिनः ॥ हताअस्यकर्मणोविघ्नकर्तारः ॥
शत्रवःपराभवंयांतु ॥ शाम्यंतुघोराणि ॥ शाम्यंतुपापानि ॥ शाम्यंत्वीतयः ॥ शुभानिवर्धंतां ॥ शिवाआ
पःसंतु ॥ शिवाऋतवःसंतु ॥ शिवाअग्नयःसंतु ॥ शिवाआहुतयःसंतु ॥ शिवाओषधयःसंतु ॥ शिवाव
नस्पतयःसंतु॥ शिवाअतिथयःसंतु ॥अहोरात्रेशिवेस्यातां॥निकामेनिकामेनःपर्जन्योवर्षतुफलिन्योनओषधयः
पच्यंतांयोगक्षेमोनःकल्पतां ॥शुक्रांगारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिताआदित्यपुरोगाःसर्वेग्रहाः ॥११४॥
प्रीयंतां ॥ भगवान्नारायणःप्रीयतां ॥ भगवान्पर्जन्यःप्रीयतां ॥ भगवान्त्स्वामीमहासेनःप्रीयतां ॥ पुण्याह

कालान्वाचयिष्ये ॥ वाच्यतां ॥ ॐउद्गातेवशकुनेसामगायसिब्रह्मपुत्रइवसवनेषुशंससि ॥ वृषेववाजी
शिशुमतीरपीत्यासर्वतोनःशकुनेभद्रमावदविश्वतोनःशकुनेपुण्यमावद ॥ याज्ययायजतिप्रत्तिर्वैयाज्यापुण्यै
वलक्ष्मीःपुण्यामेवतल्लक्ष्मींसंभावयतिपुण्यांल्लक्ष्मींसंस्कुरुते ॥ यत्पुण्यंनक्षत्रं ॥ तद्बट्कुर्वीतोपव्युषं ॥ यदावैसू
र्यउदेति ॥अथनक्षत्रंनैति ॥ यावंतितत्रसूर्योगच्छेत् ॥ यत्रजघन्यंपश्येत् ॥ तावंतिकुर्वीतयत्कारीस्यात् ॥पुण्या
हएवकुरुते ॥ तानिवाएतानियमनक्षत्राणि ॥ यान्येवदेवनक्षत्राणि ॥ तेषुकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकु
रुते ॥ मह्यंसकुटुंबायमहाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणायामुककर्मकारिणेपुण्याहंभवंतोब्रुवंतु
इतित्रिर्यजमानः ॥ ॐपुण्याहमितित्रिर्विप्रावदेयुः ॥ अत्रपुण्याहादयःशब्दाःप्रतिवचनेप्रथमैकवचनांताए
वभवंति ॥ तेषांस्वपरत्वात् ॥ ॐस्वस्तयेवायुमुपब्रवामहैसोमंस्वस्तिभुवनस्ययस्पतिः ॥ बृहस्पतिंसर्वग
णंस्वस्तयेस्वस्तयआदित्यासोभवंतुनः ॥ आदित्यउदयनीयःपथ्ययैवेतःस्वस्त्याप्रयंतिपथ्यांस्वस्तिमभ्युद्यं
तिस्वस्त्येवेतःप्रयंतिस्वस्त्युद्यंतिस्वस्त्युद्यंति ॥ स्वस्तिनइंद्रोवृद्धश्रवाःस्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिन
स्ताक्ष्योअरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु ॥ अष्टौदेवावसवःसोम्यासः ॥ चतस्रोदेवीरजराःश्रविष्ठाः ॥
तेयज्ञंपांतुरजसःपरस्तात् ॥ संवत्सरीणममृतं स्वस्ति ॥ मह्यमित्यादिअमुककर्मकारिणेस्वस्तिभवंतोब्रुवं

 



स्विति त्रिर्यजमानः ॥ ॐ स्वस्तीतिप्रतिवचनं ॥ ॐ ऋध्यामस्तोमंसनुयामवाजमानोमंत्रंसरथेहोपयातं ॥ यशोनपक्वंमधुगोष्वंतराभूतांशोअश्विनोःकामंमप्राः ॥ सर्वामृद्धिमृध्नुयामितितंवैतेजसैवपुरस्तात्पर्यभवच्छंदोभिर्मध्यतोक्षरैरुपरिष्टाद्वायव्यासर्वतोद्वादशाहंपरिभूयसर्वामृद्धिमार्ध्नोत्सर्वामृद्धिमृध्नोतियएवंवेद ॥ ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनोअस्तु ॥ अनूराधान्हविषावर्धयंतः ॥ शतंजीवेमशरदःसवीराः ॥ त्रीणित्रीणिवैदेवानामृद्धानि ॥ त्रीणिछंदांसि त्रीणिसवनानि ॥ त्रयइमेलोकाः ॥ ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ मह्यमित्यादिअमुककर्मकारिणेऋद्धिंभवंतोब्रुवंतुइतित्रिर्यजमानः ॥ ॐ ऋद्धिरितिप्रतिवचनंत्रिः ॥ ॐश्रियेजातःश्रियआनिरियायश्रियंवयोजरितृभ्योदधाति ॥ श्रियंवसानाअमृतत्वमायन्भवंतिसत्यासमिथामितद्रौ ॥ श्रियएवैनंतच्छ्रियामादधातिसंततमृचावषट्कृत्यंसंतत्यैसंधीयतेप्रजयापशुभिर्यएवंवेद ॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंचलोकमिदमूचसर्वं ॥ तन्नोनक्षत्रमभिजिद्विजित्य ॥ श्रियंदधात्वहृणीयमानं ॥ अहेर्बुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयिविदाविदुः ॥ ऋचःसामानियजूंषि ॥ साहिश्रीरमृतासतां ॥ एभिर्मंत्रैःसुवासिनीभिर्नीराजनंकारयंति ॥ मह्यमित्यादिपूर्ववत् ॥ अमुककर्मकारिणे श्रीरस्त्वितिभवंतोब्रुवंतुइतित्रिर्यजमानः ॥ ॐअस्तुश्रीरितिप्रतिवचनंत्रिः ॥ वर्षशतंपूर्णमस्तु ॥ शिवंक

र्मास्तु ॥ गोत्राभिवृद्धिरस्तु ॥ ब्रह्माप्रीयतां ॥ कर्मांतरेपुण्याहवाचनेयथोक्तादेवताग्राह्या ॥ शुक्रेभिरंगैरज
आततन्वान्क्रतुंपुनानःकविभिःपवित्रैः ॥ शोचिर्वसानःपर्यायुरपांश्रियोमिमीतेबृहतीरनूनाः ॥ तदप्येषश्लो
कोभिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहे ॥ आविक्षितस्यकामप्रेर्विश्वेदेवाःसभासदइति ॥ ततउ
त्तरकलशंदक्षिणहस्तेनदक्षिणकलशंवामहस्तेनगृहीत्वाताभ्यांधाराद्वयंसंततंपात्रेनिषिंचेदेभिर्मंत्रैः ॥ वास्तो
ष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनोभवद्विपदेशंचतुष्पदे ॥
वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्व ॥
वास्तोष्पतेशग्मयासंसदातेसक्षीमहिरण्वयागातुमत्या ॥ पाहिक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानः।
अमीवहावास्तोष्पतेविश्वारूपाण्याविशन् ॥ सखासुशेवएधिनः ॥ शिवंशिवंशिवं ॥ ततःकर्तुर्वामतःपत्नी
मुपवेश्य ॥ पात्रेपातितजलेनपल्लवदूर्वाभिरुदङ्मुखाविप्राअभिषिंचेयुस्तिष्ठंतः ॥ ॐसमुद्रज्येष्ठाःसलिल
स्यमध्यात्पुनानायंत्यनिविशमानाः ॥ इंद्रोयावज्रीवृषभोरराद्ताआपोदेवीरिहमामवंतु ॥ याआपोदिव्या
उतवास्रवंतिखनित्रिमाउतवायाःस्वयंजाः ॥ समुद्रार्थायाःशुचयःपावकास्ताआपोदेवीरिहमामवंतु ॥ या
सांराजावरुणोयातिमध्येसत्यानृतेअवपश्यन्जनानां ॥ मधुश्चुतःशुचयोयाःपावकास्ताआपोदेवीरिहमाम

वंतु ॥ यासुराजावरुणोयासुसोमेविश्वेदेवायासूर्जंमदंति ॥ वैश्वानरोयास्वग्निःप्रविष्टस्ताआपोदेवीरिहमा
मवंतु ॥ त्रायंतामिहदेवास्त्रायंतांमरुतांगणः ॥ त्रायंतांविश्वाभूतानियथायमरपाअसत् ॥ आपइद्वाउभेष

जीरापोअमीवचातनीः ॥ आपःसर्वस्यभेषजीस्तास्तेकृण्वंतुभेषजं ॥ हस्ताभ्यांदशशाखाभ्यांजिह्वावाचः
पुरोगवी ॥ अनामयित्नुभ्यांत्वाताभ्यांत्वोपस्पृशामसि ॥ इमाआपःशिवतमाइमाःसर्वस्यभेषजीः ॥ इमा
राष्ट्रस्यवर्धनीरिमाराष्ट्रभृतोमृताः ॥ याभिरिंद्रमभ्यषिंचत्प्रजापतिःसोमंराजानंवरुणंयमंमनुं ॥ ताभिरद्भिरभि
षिंचामित्वामहंराज्ञांत्वमधिराजोभवेह ॥ महांतंत्वामहीनांसम्राजंचर्षणीनां ॥ देवीजनित्र्यजीजनद्भद्राज
नित्र्यजीजनत् ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामग्नेस्तेजसासूर्यस्यवर्चसेंद्रस्येंद्रिये
णाभिषिंचामि ॥ बलायश्रियैयशसेन्नाद्याय ॥ ॐ देवस्यत्वासवितुःप्रसवे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णो
हस्ताभ्यां ॥ अश्विनोर्भैषज्येन ॥ तेजसेब्रह्मवर्चसायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रसवे ॥ अश्विनो
र्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ सरस्वत्यैभैषज्येन ॥ वीर्यायान्नाद्यायाभिषिंचामि ॥ देवस्यत्वासवितुःप्रस
वे ॥ अश्विनोर्बाहुभ्यां ॥ पूष्णोहस्ताभ्यां ॥ इंद्रस्येंद्रियेण ॥ श्रियैयशसेबलायाभिषिंचामि॥देवस्यत्वास
वितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांसरस्वत्यैवाचोयंतुर्यंत्रेणाग्नेस्त्वासाम्राज्येनाभिषिंचामींद्रस्यबृहस्प

बलो०॥स्वस्त्ययनं तार्क्ष्य०॥

तेस्त्वा साम्राज्येनाभिषिंचामि ॥ पुराणोक्तमंत्रैः ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चपूजिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ ॐभूर्भुवःस्वः ॥ अमृताभिषेकोस्तु ॥ शांतिःपुष्टिस्तुष्टिश्चास्तु ॥ ततआचामेत् ॥ ततआचारप्राप्तंवस्त्रादिदानंतत्परिधानंच ॥ युवासुवासाःपरिवीतआगात् ॥ सउश्रेयान्भवतिजायमानः ॥ तंधीरासःकवयउन्नयंति ॥ स्वाधियोमनसादेवयंतः ॥ इतिपुण्याहवाचनप्रयोगः ॥ अथमातृकापूजा ॥ गौरीपद्माशचीमेधासावित्रीविजयाजया ॥ देवसेनास्वधास्वाहामातरोलोकमातरः ॥ धृतिःपुष्टिस्तथातुष्टिरात्मनःकुलदेवता ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीचामुंडासप्तमातरः ॥ एताःगणपतिदुर्गाक्षेत्रपालवास्तोष्पतिसहिताःसप्तविंशत्यक्षतपुंजेष्वा

वाह्य॥नर्यंप्रजांमेंगोपाय॥अमृतत्वायजीवसे॥जातांजनिष्यमाणांच॥अमृतेसत्येप्रतिष्ठितां॥ इतिप्रतिष्ठाप्य ॥
नाममंत्रैःषौडशोपचारैःपंचोपचारैर्वासंपूज्य॥ ॐगौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥
अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन्॥इतिपुष्पांजलिंदत्वा॥यांतुदेवगणाःसर्वेपूजामादायपार्थि
वीं॥इष्टकामप्रसित्ध्यर्थंपुनरागमनायचेतिविसर्जयेत्॥ अथनांदीश्राद्धं॥सदूर्वांकुरानक्षतान्जलंचादायसत्य
वसुसंज्ञकाविश्वेदेवानांदीमुखाःभूर्भुवःसुवःइदंवःपाद्यमियंचवृद्धिः। मातृपितामहीप्रपितामह्यःनांदीमुख्यः
भूर्भूवःसुवःइदंवःपाद्यमियंचवृद्धिः । पितृपितामहप्रपितामहाःनांदीमुखाःभूर्भूवःसुवःइदंवःपाद्यमियंचवृ
द्धिः ॥ मातामहमातुःपितामहमातुःप्रपितामहाःपत्नीसहितानांदीमुखाःभूर्भुवःसुवःइदंवःपाद्यमियंचवृद्धिः॥
सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाःभूर्भुवःसुवःइदंवआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः॥ मातृ
पितामहीप्रपितामह्यःनांदीमुख्यःभूर्भुवःसुवःइदंवआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृद्धिः॥ पितृपि
तामहप्रपितामहानांदीमुखाःभूर्भुवःसुवरिदंवआसनगंधाद्युपचारकल्पनंस्वाहानमइयंचवृत्धिः ॥ मातामह
मातुःपितामहमातुःप्रपितामहाःपत्नीसहितानांदीमुखाःभूर्भुवःसुवरिदंवआसनगंधाद्युपचारकल्पनंस्वाहानम
इयंचवृत्धिः ॥गौर्यादिषोडशमातरःब्राम्ह्याादिसप्तमातरःगणपत्यादिसहिताःभूर्भुवःसुवरिदंवोयुग्मब्राह्मणभो
जनपर्याप्तमन्नंहिरण्यंवायथाशक्तिस्वाहानमइयंचवृद्धिः ॥ सत्यवसुसंज्ञकाविश्वेदेवानांदीमुखाभूर्भुवःसुव

रिदंवोयुग्मब्राह्मणभोजनपर्याप्तमन्नंहिरण्यंवायथाशक्तिस्वाहानमइयंचवृद्धिः ॥ मातृपितामहीप्रपितामह्योनां
दीमुख्योभूर्भूवःसुवरिदंवोयुग्मब्राह्मणभोजनपर्याप्तमन्नंहिरण्यंवायथाशक्तिस्वाहानमइयंचवृद्धिः ॥ पितृपि
तामहप्रपितामहानांदीमुखाःभूर्भुवःसुवरिदंवोयुग्मब्राह्मणभोजनपर्याप्तमन्नंहिरण्यंवायथाशक्तिस्वाहानमइ
यंचवृद्धिः ॥ मातामहमातुःपितामहमातुःप्रपितामहाःपत्नीसहितानांदीमुखाःभूर्भुवःसुवरिदंवोयुग्मब्राह्मण
भोजनपर्याप्तमन्नंहिरण्यंवायथाशक्तिस्वाहानमइयंचवृद्धिः ॥ ततःउपास्मैगायतानरःपवमानायेंदवे ॥ अ
भिदेवांइयक्षते ॥ अभितेमधुनापयोथर्वाणोअशिश्रयुः ॥ देवंदेवायदेवयु ॥ सनःपवस्वशंगवेशंजनायशम
र्वते ॥ शंराजन्नोषधीभ्यः ॥ बभ्रवेनुस्वतवसेरुणायदिविस्पृशे ॥ सोमायगाथमर्चत ॥ हस्तच्युतेभिरद्रि
भिःसुतंसोमंपुनीतन ॥ मधावाधावतामधु ॥ कृतस्यनांदीश्राद्धस्यप्रतिष्ठाफलसिद्ध्यर्थंद्राक्षामलकानितन्नि
ष्क्रयीभूतंवायथाशक्तिहिरण्यंदक्षिणात्वेनस्वाहानमइयंचवृद्धिः ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिप
रितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयस्यामपतयोरयीणां ॥ कृतेननांदीश्राद्धेननांदीमुखदेवताः
प्रीयंतांवृद्धिः ॥ मातापितामही चैवतथैवप्रपितामही ॥ पितापितामहश्चैवतथैवप्रपितामहः ॥ मातामहस्त
त्पिताचप्रमातामहकादयः ॥ एतेभवंतुसुप्रीताःप्रयच्छंतु चमंगलं ॥ इतिसंप्रार्थ्य ॥ इडामग्नेपुरुदंससं
निंगोःशश्वत्तमंहवमानायसाध ॥ स्यान्नःसूनुस्तनयोविजावाग्नेसातेसुमतिर्भूत्वस्मे ॥ नाणकमादायपात्रे

वादयेत् ॥ ततोनिषिद्धतिथिवारादौरजोदर्शनेसतिशांतिकंशांतिप्रकरणोक्तरीत्याकार्यं ॥ ततःकर्मांगत्वेनद
शाधिकान्ब्राह्मणान्यथाकालंयथोपपन्नेनान्नेनभोजयिष्ये ॥ इतिसंकल्प्ययथाकालंभोजयेत् ॥ ततःकृतस्य
कर्मणःसांगतासिद्ध्येनानानामगोत्रान्ब्राह्मणानूगंधादिभिःपूजयिष्ये ॥ तेभ्योभूयसींदक्षिणादानंचकरिष्येइ
तिसंकल्प्यकुर्यात् ॥ ततःप्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् ॥ स्मरणादेवतद्विष्णोःसंपूर्णस्यादितिश्रु
तिरितिकर्मसाद्गुण्यायविष्णुंस्मृत्वाशिष्टैरिष्टैश्चसहभोजनंकुर्यात् ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ४३ ॥ ॥ नांदी श्राद्धे संक्षेपतो जीव त्पितृक निर्णयः ॥

नांदीमुखेकर्मणिसंप्रवृत्तेपितर्यथोजीवतियस्यपुंसः ॥ येषांचकुर्यात्स्वपितास्वयंचेत्तेषांहिकुर्यादितिशास्त्रसि
द्धं ॥ वृत्धौतीर्थेचसन्यस्तेतातेचपतितेसति ॥ येभ्यएवपितादद्यात्तेभ्योदद्यात्स्वयंसुतः ॥ पितरिजीवतितुस्व
मातरिमृतायामपिपितुरेवमातृमातामहयोःकुर्यात् ॥ अग्निपुराणे ॥ गणशःक्रियमाणानांमातृणांपूजनंसकृ
त् ॥ सकृदेवभवेच्छ्राद्धमादौनपृथगादिषु ॥ ततः

## ॥ ४४ ॥ अथबौधायनोक्तऋतुशांतिप्रयोगः ॥

श्रीगणेशायनमः ॥ ॥ अथबौधायनोक्तऋतुशांतिप्रयोगः ॥ यजमानस्तिथ्यादिदोषरहित चंद्रानुकूल्ये चतु
र्थपंचमदिनेन्यतरेवाशुभासनेवस्त्राच्छादितेपीठेप्राङ्मुखउपविश्यस्वदक्षिणतःपत्नींचोपवेश्यपवित्रपाणिः

प्राणानायम्यसुमुखश्चेत्यादिदेशकालौस्मृत्वाममपत्न्याःप्रथमरजोदर्शनेअमुकदुष्टमासादिसूचितसकलारि
ष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंसग्रहमखांबौधायनोक्तांऋतुशांतिंकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवा
चनंआचार्यादिवरणंचकरिष्ये ॥ अत्रकृताकृतंनांदीश्राद्धं ॥ अमुकगोत्रोत्पंन्नोमुकशर्माहं अमुकगोत्रोत्पंन्न
ममुकशर्माणंअमुकशाखाध्यायिनंऋतुशांत्याख्येकर्मणिआचार्यत्वामहंवृणेइतिवृत्वा ॥ आचार्यस्तुयथास्व
र्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ एवमेवब्रह्मादीन्वृत्वा ॥ अस्ययागस्यनि
ष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रसन्नैःप्रकुर्वीतशांतिकंविधिपूर्वकं ततोगंधवस्त्रादिभिःयथाशक्तिरभ्यर्च्य ॥
ततःआचार्यः पवित्रपाणिःदेशकालौसंकीर्त्ययजमानेनवृतोहमाचार्यकर्मकरिष्येइतिसंकल्प्य ॥ ततःसंभा
रान्संपाद्य ॥ सर्षपान्गृहीत्वा ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंत
त्रगच्छतु ॥ इतिप्राच्यादिदिक्षुप्रादक्षिण्येनविकीर्य ॥ ततःशुचीवइत्यृग्भिः पंचगव्यंप्रोक्ष्य ॥ ततःआपो
हिष्ठेत्यृग्भिःशुद्धाद्भिश्चप्रोक्ष्य ॥ ततःकृतांजलिःभद्रंकर्णेभिः स्वस्तिनइंद्रोवृद्धश्रवाःइतिमंत्रद्वयंपठेत् ॥ त
तोगृहादीशान्यांगोमयेनोपलिप्यभूमौमही। द्यौःपृथिवीचनेतिभूमिंस्पृष्ट्वा॥ ओषधयःसंवदंतेतिप्रस्थाष्टमितैर्व्री
हिभिस्तदर्धैस्तंडुलैस्तदर्धैस्तिलैश्चपरिभावेनअरत्निमात्रांसमांचतुरस्रांवेदिंकृत्वा ॥ अशक्तश्चेद्यथाशक्त्यावा
वेदिमध्येष्टदलकमलमुल्लिख्यकुशैर्दूर्वाभिर्वेदिंप्रच्छाद्यवेद्युपरितंआजिघ्रकलशमितितंतुवेष्टितंनवमव्रणंसु
दृढंकुंभंनिधायकांडात्कांडादितिकूर्चमंतर्धायतस्मिन्आपोवाइदं सर्वमित्यनुवाकेनआपोहिष्ठेतितिसृभिः

कुंभेउदकंपूरयित्वामंत्रावृत्त्योपरिअश्वत्थेवइतिपंचपल्लवान्निक्षिप्य ॥ तेनैवमंत्रेणकपित्थाश्वत्थपलाश
बिल्वोदुंबराणांत्वचश्चनिक्षिप्य ॥ बृहस्पतेजुषस्वनेतिपंचरत्नानियुवासुवासेतिनववस्त्रयुग्मेनकलशंवेष्ट
 यित्वायाःफलिनीर्येतिनारीकेलफलंकुंभेनिधायतत्कुंभंबिल्वपल्लवैश्चूतपल्लवैश्चावकीर्यगंधाक्षतपुष्पमालाभिः
कलशंभूषयित्वा ॥ तदुपरितंदुलपूरितपात्रंपूर्णादर्विपरापतेतिसंस्थाप्यशिष्टाचारायथाशक्तिसुवर्णादि
निर्मितांविष्णुप्रतिमांअश्मंनूर्जमित्येतेनानुवाकेनाग्न्युत्तारणादिप्राणप्रतिष्ठापनपूर्वकांतद्विष्णोःपरमामितिमंत्रे
णप्रतिष्ठाप्यतद्दक्षिणतोब्रह्मजज्ञानमितिब्रह्माणंतदुत्तरतोत्र्यंबकेतिरुद्रंचपूर्ववत्प्रतिष्ठाप्य ॥ प्रतिष्ठा
मंत्रैरुक्तक्रमेणदेवतात्रयंकांडानुसमयेनपदार्थानुसमयेनवाषोडशोपचारपूजांविधाय ॥ ऋत्विग्भिः स
हाचार्यैःकुंभमन्वारभ्य ॥ नारायणायविद्महेवासुदेवायधीमहि ॥ नोविष्णुःप्रचोदयात् ॥ इतिवै
ष्णवींगायत्रींअष्टोत्तरसहस्रंअष्टोत्तरशतंवाजपेत् ॥ तदंतेगायत्रींवेदादीनापोहिष्ठामयोभुवइतित्रीन्
हिरण्यवर्णाःशुचयःपावकाइत्यनुवाकंपवमानःसुवर्जनइत्यनुवाकंसहस्रशीर्षापुरुषइत्यनुवाकंऋचांप्राचीम
हतीदिगुच्यतेत्यनुवाकंचसकृत्पठेत् ॥ ततःकुंभस्योत्तरतःमहतीस्तृणमयेविष्टरेनववस्त्रकंचुक्यादिना
लंकृतांवामभागस्थपत्न्यासहितंप्राङ्मुखंयजमानंसऋत्विगुदङ्मुखाचार्यःस्थापितकलशोदकपात्रांतरंगृही 
त्वातत्रस्थपंचपल्लवैःकुशदूर्वैश्चाशीर्वादपुरःसरंअभिषिंचेदेभिर्मंत्रैः ॥ तद्यथा ॥ आपोहिष्ठामयोभु
वस्तानऊर्जेदधातन ॥ महेरणायचक्षसे ॥ शिवमस्तुकल्याणंत्वास्त्वितिमंत्रांतेयोजनीयं ॥ इतिसर्वत्र ॥

आपोहिष्ठाइतितिसृभिःहिरण्यवर्णाइतिचतसृभिःपवमानःसुवर्जनइत्येतेनानुवाकेनसुरास्त्वामभिषिंचंत्विति
पौराणिकैर्मंत्रैश्च॥ ततःकलशोदकेनान्येनचोष्णोदकेनतैलाभ्यंगपूर्वकसुस्नातौदंपतीअभिषेककालीनवासां
सिपरित्यज्याहतशुक्लवासांसिपरिधायश्वेतचंदनकुंकुमपुष्पमालादिधारणंकुर्यात् ॥ त्यक्तवासान्याचार्यायद
द्यात् ॥ ततोनारीयत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनात्पंचगव्यस्यदहत्यग्निरिवेंधनं ॥ इतिपंचग
व्यंप्राशयित्वा ॥ अथाभिषेकानंतरंपत्न्यासहयजमानोन्वारब्धाचार्योवेद्याःपश्चिमतःस्थंडिलंकृत्वातत्रभूसं
स्काराद्यग्निप्रतिष्ठापनांतंविधायस्थापितकुंभस्येशान्यांवेद्यादौनवग्रहाणांतदंगदेवतांप्रत्यधिदेवतांश्चतत्तन्मंत्रै
रावाहनपूजनादिवास्तुशांत्योक्तरीत्याकुर्यात् ॥ अथान्वाधानं॥ श्रद्धएहीत्यादिऋतुशांतिहोमाख्येकर्मणिया
यायक्ष्यमाणादेवतेत्यादिव्याहृत्यंतमुक्त्वातत्रादौआदित्यादिनवग्रहस्थापितदेवतानामन्वाधानोक्तरीत्यान्वा
धानंकुर्यात्॥ प्रधानहोमान्वाधाने॥विष्णुसूक्तेनप्रत्यृचंविष्णुंअष्टोत्तरशतसंख्याकाभिःपलाशसमिधाहुतिभिर्य
क्ष्ये ॥ ब्रह्मसूक्तेनप्रत्यृचंब्रह्माणंअष्टोत्तरशतसंख्याकाभिःगृहसिद्धान्नाहुतिभिर्यक्ष्ये ॥ रुद्रसूक्तेनप्रत्यृचंरुद्रं
अष्टोत्तरशतसंख्याकाभिः आज्याहुतिभिर्यक्ष्ये ॥ घृतसूक्तेनप्रत्यृचंएकावृत्त्याआयुष्यदेवतामाज्येनयक्ष्ये ॥
कृत्तिकानक्षत्रदेवताग्निंअष्टाविंशतिसंख्याकाभिःसमिच्चर्वाज्याहुतिभिर्यक्ष्ये ॥ त्र्यंबकंअष्टोत्तरशतसंख्याका
भिस्तिलाज्याहुतिभिर्यक्ष्ये ॥ ततःइमंमेवरुणेत्यादिआज्यसंस्कारांतेसितधमन्नमप्नावधिश्रित्याद्भिःप्रोक्षेत्त
देवपवित्रमित्याचक्षतेतिधर्मेस्मरणात् ॥ ततःपरिधिदानाद्यन्वाधानादिक्रमेणग्रहहोमांतेप्रधानहोमःकार्यः॥

ॐविष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांꣳसि॥ योअस्कभायदुत्तरꣳ सधस्थंविचक्रमाणस्त्रेधोरुगा
यस्वाहा ॥ १ ॥ तदस्यप्रियमभिपाथोअश्यांनरोयत्रदेवयवोमदंति॥ उरुक्रमस्यसहिबंधुरित्थाविष्णोःपदेप
रमेमध्वउत्सःस्वाहा ॥ २ ॥ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणे
ष्वधिक्षियंतिभुवनानिविश्वास्वाहा ॥ ३ ॥ परोमात्रयातन्वावृधानननेमहित्वमन्वश्नुवंति ॥ उभेतेविद्मर
जसीपृथिव्याविष्णोदेवत्वंपरमस्यवित्सेस्वाहा ॥ ४ ॥ विचक्रमेपृथिवीमेषएतांक्षेत्रायविष्णुर्मनुषेदशस्यन् ॥
ध्रुवासोअस्यकीरयोजनासउरुक्षितिꣳसुजनिमाचकारस्वाहा ॥ ५ ॥ त्रिर्देवः पृथिवीमेषएतांविचक्रमेशत
र्चसंमहित्वा ॥ प्रविष्णुरस्तुतवसस्तवीयान्त्वेषꣳह्यस्यस्थविरस्यनामस्वाहा ॥ ६ ॥ एवंसूक्तान्यष्टादशावृ
त्तिभिः ॥ अष्टोत्तरशतसंख्ययाआहुतयोभवंति ॥एवमेवब्रह्मसूक्तेनाज्यं॥ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरु
चोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवःस्वाहा ॥ १ ॥ पिताविराजामृषभोर
यीणामंतरिक्षंविश्वरूपआविवेश ॥ तमर्कैरभ्यर्चंतिवत्संब्रह्मसंतंब्रह्मणावर्धयंतःस्वाहा ॥ २ ॥ ब्रह्मदेवानज
नयद्ब्रह्मविश्वमिदंजगत् ॥ ब्रह्मणःक्षत्रंनिर्मितंब्रह्मब्राह्मणआत्मनास्वाहा ॥ ३ ॥ अंतरस्मिन्निमेलोकाअंत
र्विश्वमिदंजगत् ॥ ब्रह्मैवभूतानांज्येष्ठंतेनकोर्हतिस्पर्धितुꣳस्वाहा ॥ ४ ॥ ब्रह्मन्देवास्त्रयस्त्रिꣳशद्ब्रह्मन्निंद्र

प्रजापती ॥ ब्रह्मन्हविश्वाभूतानिनावीवांतःसमाहितास्वाहा ॥ ५ ॥ चतस्रआशाःप्रचरंत्वग्नयइमंनोयज्ञं
नयतुप्रजानन् ॥ घृतंपिन्वन्नजरꣳसुवीरंब्रह्मसमिद्भवत्याहुतीनाꣳस्वाहा ॥ ६ ॥ एवमेवाज्येनरुद्रसूक्तं ॥
परिणोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृडय
स्वाहा ॥ १ ॥ स्तुहिश्रुतंगर्तसदंयुवानंमृगंनभीममुपहत्नुमुग्रं ॥ मृडाजरित्रेरुद्रस्तवानोअन्यंतेअस्मन्निवं
पंतुसेनास्वाहा ॥ २ ॥ मीढुष्टमाशिवंतमशिवोनःसुमनाभव ॥ परमेवृक्षआयुधंनिधायकृत्तिंवसानआचरपि
नाकंबिभ्रदागहिस्वाहा ॥ ३ ॥ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेवि
श्वमभ्वंनवाओजीयोरुद्रत्वदस्तिस्वाहा ॥ ४ ॥ त्वमग्नेरुद्रोअसुरोमहोदिवस्त्वꣳशर्धोमारुतंपृक्षईशिषे ॥
त्वंवातैररुणैर्यासिशंगयस्त्वंपूषाविधतःपासिनुत्मनास्वाहा ॥ ५ ॥ आवोराजानमध्वरस्यरुद्रꣳ होतारꣳ स
त्ययजꣳ रोदस्योः ॥ अग्निंपुरातनयित्नोरचित्ताद्धिरण्यरूपमवसेकृणुध्वꣳ स्वाहा ॥ ६ ॥ अथायुष्यहोमं
घृतसूक्तेनप्रत्यृचंजुहुयात् ॥ योब्रह्माब्रह्मणउज्जभार ः प्राणेश्वर ः कृत्तिवासा ः पिनाकी ॥ ईशानोदेव ः सन
आयुर्दधातुतस्मैजुहोमिहविषाघृतेनस्वाहा ॥ १ ॥ विभ्राजमानःसरिरस्यमध्याद्रोचमानाघर्मरुचिर्यआगात्

सम्मृत्युपाशानपनुद्यघोरामिहायुषेनोघृतमत्तुदेवास्वाहा ॥ २ ॥ ब्रह्मज्योतिर्ब्रह्मपत्नीषुगर्भंयमोदधात्पुरुरू
पंजयंतं ॥ सुवर्णरंभगृहमर्कमर्चनमायुषेवर्धयामोघृतेनस्वाहा ॥ ३ ॥ श्रियंलक्ष्मीमंबिकामोपलांगांषष्ठीं
चयामिंद्रसेनेत्युदाहुः ॥ तांविद्यांब्रह्मयोनिँसरूपामिहायुषेतर्पयामोघृतेनस्वाहा ॥ ४ ॥ दाक्षायण्यःस
र्वयोन्यःसयोन्यःसहस्रशोविश्वरूपाविरूपाः ॥ ससूनवःसपतयःसयूथ्याआयुषेनोघृतमिदंजुषताँस्वाहा॥
॥ ५ ॥ दिव्यागणाबहुरूपाःपुराणाआयुश्छिदोनःप्रथमंतुवीरान् ॥ तेभ्योजुहोमिबहुधाघृतेनमानःप्रजाँ
रीरिषोमोतवीरान्स्वाहा ॥ ६ ॥ एकःपुरस्तात्यइदंबभूवयतोबभूवभुवनस्यगोपाः ॥ तमेष्यतिभुवनँसांप
रायेसनोहविर्घृतमिहायुषेतुदेवःस्वाहा ॥ ७ ॥ वसून्रुद्रानादित्यान्मरुतोथसाध्यान्ऋभून्यक्षान्गंधर्वांश्चपितॄं
श्चविश्वान् ॥ भृगून्त्सर्पाँश्चांगिरसोथसर्वान्घृतंहुत्वास्वायुष्यामहयामशश्वत्स्वाहा ॥ ८ ॥ अथनक्षत्र
होमःसामिदंनाज्यैः ॥ अग्निर्नःपातुकृत्तिकानक्षत्रंदेवमिंद्रियं ॥ इदमासांविचक्षणँहविरासंजुहोतनस्वा
हा ॥ १ ॥ यस्यभांतिरश्मयोयस्यकेतवोयस्येमाविश्वाभुवनानिसर्वा ॥ सकृत्तिकाभिरभिसंवसानोग्निर्नोदे
वःसुवितेदधातुस्वाहा ॥२ ॥ ततस्तिलैः ॥ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मु
क्षीयमामृतात्स्वाहेतिअष्टोत्तरशतंजुहुयात् ॥ इमंमेवरुणेत्यादिराष्ट्रभृदंतंहुत्वाहुतशेषद्रव्येणस्विष्टकृतंजु
हुयात्॥हव्यवाहमितिपुरोनुवाक्यामनूच्ययाज्ययाजुहोतिततइध्मसंनहनाद्युत्तरपरिषेकांतेदिक्पालेभ्यःसदी

पमाषभक्तबलीन्संकल्प्य॥यजमानद्वाराकारयेत् ॥ ततोग्न्यायतनस्यासमंतात्पूर्वादिदिक्षुप्रादक्षिण्येनत्रातार
मिंद्रमित्यादिभिर्मंत्रैर्बलीन्दद्यात्॥ततोआदित्यादिस्थापितग्रहदेवताभ्यःपीठदेवताभ्यश्चतत्तन्मंत्रैस्तदुद्देशेन
बलीन्समर्प्य ॥ क्षेत्रपालाय ॥ क्षेत्रस्यपतिनावय ँ हितेनेवजयामासि ॥ गामश्वंपोषयित्न्वासनोमृडातीदृ
शेइतिक्षेत्रपालभूतप्रेतपिशाचशाकिनीडाकिनीवेतालपरिवारयुतायइमंबलिमित्यादि ॥ ततःशूद्रादि
नाबलिनयनेकृतेपृथिवीशांतिरितितस्यप्रोक्ष्यसयजमानाचार्यःप्रक्षालितपाणिपादआचांतःस्रुचिद्वादशगृही
तमष्टगृहीतंवाआज्यमादायतदुपरिचंदनादिभूषितफलंनिधायपत्न्यासहयजमानान्वारब्धेआचार्यस्तिष्ठन्स
प्ततेअग्नेसमिधः॰ घृतेनस्वाहेतिपूर्णाहुतिंजुहुयात्॥ततःप्रणीतापर्याहृत्यादिपूर्णपात्रदानांतेआचार्योयजमान
श्चसंस्थाजपेनोपस्थायाग्नेःपश्चात्सपत्नीकोयजमानउपविश्यविभूतिधारणंकुर्यात् ॥ आचार्यायसवत्सांगां
तदभावेयथाशक्तिसुवर्णंऋत्विग्भ्योयथाशक्तिदक्षिणांदद्यात् ॥ ततःआवाहितपीठदेवताआदित्यादिनवग्रह
देवताश्चवरुणस्यचआचार्येणसहउत्तरपूजांविधायविसर्जनांतेआचार्यहस्तेसोपस्करप्रतिमांप्रतिपाद्यअग्निपू
जांतेगच्छगच्छेत्यग्निंविसृज्यपुण्याहंवाचयेत् ॥ कर्मांगदेवतामुद्दिश्यदशाधिकान्ब्राह्मणान्भोजयिष्ये॥ इति
संकल्प्यभूयसींदक्षिणांदद्यात्नीराजनादिशांतिपाठंब्राह्मणैःसहपठेत् ॥कर्मसंपूर्णमस्त्वितिवाचयित्वाप्रमादा
त्कुर्वतांकर्मेतिविष्णुंस्मरेत् ॥ ॥ इतिसंस्कारनिर्णयेबौधायनोक्ताऋतुशांतिःसमाप्ता ॥ ॥ छ ॥

## ॥ अथ गर्भाधानमंत्र प्रारंभः ॥



श्रीगणेशायनमः ॥ ॥ रात्रौकृतावश्यकक्रियआचम्यस्वलंकृतांस्वच्छवस्त्रपरिधानांभार्यांसम्यगास्तृतेप र्यंकेशयनार्थमुपव्हयतेनवभिर्मंत्रैः ॥ ॐविष्णुर्योनिंकल्पयतुत्वष्टारूपाणिपिꣳशतु ॥ आसिंचतुप्रजापति र्धातागर्भंदधातुते ॥ गर्भंधेहिसिनीवालिगर्भंधेहिसरस्वति ॥ गर्भंतेअश्विनावुभावाधत्तांपुष्करस्रजौ ॥ ॥ २ ॥ हिरण्ययीअरणीयंनिर्मंथतोअश्विना ॥ तंतेगर्भꣳहवामहेदशमास्यायसूतवे ॥ ३ ॥ यथाग्निगर्भा पृथिवीद्यौर्यथेंद्रेणगर्भिणी ॥ वायुर्यथादिशांगर्भएवंगर्भंदधामिते ॥४॥ यस्ययोनिंप्रतिरेतोगृहाणपुमान्पुत्रो जायतांगर्भोअंतः ॥ तंमातादशमासोबिभर्तुसजायतांवीरतमःस्वानां ॥५॥आतेगर्भोयोनिमेतुपुमान्बाणइवे षुधिं ॥ आवीरोअत्रजायतांपुत्रस्तेदशमास्यः ॥ ६ ॥ करोमितेप्राजापत्यमागर्भोयोनिमेतुते ॥ अनूनःपू र्णोजायतामनंधोश्रोणोपिशाचधीरः ॥ ७ ॥ यानिप्रभूणिवीर्याण्यृषभाजनयंतुनः ॥ तैस्त्वंगर्भिणीभवस जायतांवीरतमःस्वानां ॥ ८ ॥ योवशायांगर्भोयश्ववेहतींद्रस्तंनिदधेवनस्पतौ ॥ तेनत्वंगर्भिणीभवसाप्रसू र्धेनुगाभव ॥ ९ ॥ ततउपयच्छते । सन्नाम्नःसꣳहृदयानिसन्नाभिःसंत्वचः ॥ संत्वाकामस्ययोक्रेणयुं जान्यविमोचनायेति ॥ ततस्तांपर्यालिंगयाति ॥ मामनुव्रताभवसहचर्यामयाभव ॥ यातेपतिघ्नीतनूर्जारघ्नीं त्वेतांकरोमिशिवात्त्वंमह्यमेधिक्षुरपाविर्जारेभ्यइति ॥ ततोमंत्रत्रयेणवारत्रयंरेतोवस्कंदनंकार्यं ॥ भूःप्रजापति

नात्यृषभेणस्कंदयामिवीरंधत्स्वासौ ॥ भुवःप्रजापतिनात्यृषभेणस्कंदयामिवीरंधत्स्वासौ ॥ सुवःप्रजापति नात्यृषभेणस्कंदयामिवीरंधत्स्वासौ ॥ अधिकंचेत्तूष्णीमेवयथेच्छमवस्कंदयेत् ॥ अत्रमंत्रेसर्वत्रासावितिपदं परित्यज्यसंबुध्यासंस्कार्यायानामग्राह्यं ॥ क्षेत्रसंस्कारत्त्वात्सकृदयंसंस्कारःकार्यः ॥ ॥ इतिसत्याषाढ हिरण्यकेशीयस्मार्तप्रयोगरत्नेप्रथमेसंस्कारप्रकरणेवैशंपायनमहेशभट्टकृतौगर्भाधानप्रयोगः ॥ ॥छ॥

## ॥ ४६ ॥ अथ पुंसवनप्रयोगः प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ तृतीयेमासिशुक्लपक्षेपुनर्वसुपुष्याभिजिद्धस्तप्रोष्ठपदानूराधाश्विनीमूलश्रवणरेवती रोहिणीमृगसंज्ञकान्यतमेपुन्नक्षत्रेचंद्रानुकूल्येपुंसवनंकार्यं ॥ कर्ताकृतनित्यक्रियःप्राङ्मुखउपविश्यदक्षिण तोभार्यांचोपवेश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यांभार्यायांविद्यमानगर्भस्यपुंस्त्वप्रतिपादनद्वा राबीजगर्भसमुद्भवैनोनिबर्हणद्वाराक्षेत्रसंस्कारद्वाराचश्रीपरमेश्वरप्रीत्यर्थंपुंसवनाख्यंकर्मकरिष्ये ॥ तदंगं गणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यगर्भाधानोक्तरीत्यातानिकुर्यात् ॥ ततःपुंसवनांगमुद्धननादिकरिष्येइतिसंकल्प्यशर्करास्थ्यादिरहितंहस्तमात्रायतंपंचप्रस्थमितासिकतादिनिर्मि तंचतुरंगुलोच्छ्रायंसमचतुरस्रंप्रागुदग्वाप्रवणंसमंवास्थंडिलंहस्तमात्रंबाहुमात्रंवाविधायात्रिमादायतूष्णीमु

त्धत्यसमंत्रंवाचारात् ॥ ॐ उद्धन्यमानमस्याअमेध्यं॥ अपपाप्मानंयजमानस्यहंतु ॥ शिवानःसंतुप्रदिशश्च
तस्त्रः॥ शन्नोमातापृथिवीतोकंसाता॥प्रागादिक्रमेणोद्धत्य॥ततस्तिस्त्रःप्राचीस्तिस्त्रउदीचीरेखाःकृत्वा ॥ शंनो
देवीरभिष्टयआपोभवंतुपीतये॥शंयोरभिस्त्रवंतुनः॥इतिन्युब्जेनपाणिनाऽऽचारादवोक्ष्य॥ततःप्रागारभ्येंद्राद्यष्टौ
लोकपालानावाहयति॥इंद्रा० ॥अ० य० नि० व० वा० सो० ई० यत्राग्निमुपसमाधायेतिसूत्रकृदाहतत्रउद्धनना
द्यग्निप्रतिष्ठांतोविधिरितिवृत्तिकृत्॥मध्ये॥ॐवैश्वानरस्यरूपं॥पृथिव्यांपरिस्त्रसा॥स्योनमाविशंतुनः ॥ॐभूर्भुव
सुवरों३ ॥पवमाननामानपाग्निंप्रतिष्ठापयामीतिप्रतिष्ठाप्य ॥ प्रज्वाल्यसमित्त्रयमादायश्रद्धए३ हिसत्येनत्त्वाव्ह
यामि ॥ इतित्रिरुच्चार्य । याःपुरस्तात्प्रस्त्रवंत्युपरिष्टात्सर्वतश्चयाः । ताभीरश्मिपवित्राभिःश्रद्धांयज्ञमारंभे ।
आकूत्यैत्वाकामायत्वासमृधेत्वापुरोदधेअमृतत्वायजीवसे । आकूतिमस्यावसेकाममस्यसमृध्यै । इंद्रस्य
युंजतेधियः । आकूतिंदेवींमनसःपुरोदधेयज्ञस्यमातासुहवामेअस्तु । यदिच्छामिमनसासकामोविदेयमेन
त्धृदयेनिविष्टमितिह्रदयालंभउदकस्पर्शः । प्राणायामः । पुंसवनहोमकर्मणियायक्ष्यमाणादेवतास्ताःसर्वा
परिग्रहीष्यामि । जातवेदसमग्निमिध्मेन ॥ आघारहोमे॥ प्रजापतिंमनुमिंद्रंचाज्येन ॥ अज्यभागहोमे ॥
अग्निसोमंचाज्येन॥सामान्यप्रधानहोमे॥अग्निजातवेदसंसऽराधनींसऽराधनींदेवींप्रसाधनींदेवींव्याहृतीनामग्निं

वायुंसूर्यंप्रजातिं चाज्येन ॥ प्रधानहोमे ॥ धातारंचतुराज्येन ॥ अंगहोमे ॥ वरुणांद्विःअग्नीवरुणौद्विःअया समाग्निंप्रजापतिं चाज्येन ॥ जयहोमे ॥ चित्तं॥चित्तिं ॥ आकूतं ॥ आकूतिं ॥ विज्ञातं ॥ विज्ञानं ॥ मनः ॥ शक्करीः ॥ दर्शं॥ पूर्णमासं ॥ बृहत् ॥ रथंतरं ॥ प्रजापतिं ॥ चाज्येन ॥ अभ्यातानहोमे ॥ अग्निंभूता नामधिपतिं ॥ इंद्रंज्येष्टानामधिपतिं ॥ यमंपृथिव्याअधिपतिं ॥ वायुमंतरिक्षस्याधिपतिं ॥ सूर्यंदिवोधिप तिं ॥ चंद्रमसंनक्षत्राणामधिपतिं ॥ बृहस्पतिंब्रह्मणोधिपतिं ॥ मित्रंसत्यानामधिपतिं ॥ वरुणंअपामधिप तिं॥ समुद्रंस्रोत्यानामधिपतिं ॥ अन्न ँ साम्राज्यानामधिपतिं ॥ सोमंओषधीनामधिपतिं ॥ सवितारंप्रस वानामधिपतिं ॥ रुद्रंपशूनामधिपतिं ॥ उदकस्पर्शः ॥ त्वष्टारंरूपाणामधिपतिं ॥ विष्णुंपर्वतानामधिपतिं मरुतोगणानामाधिपतीन् ॥ प्राचीनावीती ॥ पितृन्पितामहान्परानवरांश्चप्रत्येकमाज्येन ॥ यज्ञोपवीत्यप उपस्पृश्य ॥ राष्ट्रभृद्धोमे ॥ अग्निंगंधर्वं ॥ ओषधीरप्सरसः ॥ सूर्यंगंधर्वं ॥ मरीचीरप्सरसः ॥ चंद्रमसं गंधर्वं ॥ नक्षत्राण्यप्सरसः ॥ यज्ञंगंधर्वं ॥ दक्षिणाअप्सरसः ॥ मनोगंधर्वं ॥ ऋक्सामान्यप्सरसः ॥ वा तंगंधर्वं ॥ अपोप्सरसः ॥ भुवनस्यपतिं ॥ मृत्युंगंधर्वं ॥ विश्वमप्सरसः ॥ पर्जन्यंगंधर्वं ॥ विद्युतोप्स रसः ॥ अमृडयंमृत्युंगंधर्वं ॥ प्रजाअप्सरसः ॥ कामंगंधर्वं ॥ आधीरप्सरसः ॥ भुवनस्यपतिं ॥ प्रत्येक माज्येन ॥ स्विष्टकृद्धोमे ॥ अग्निं ँ स्विष्टकृतंहुतशेषेण ॥ प्रायश्चित्तहोमे ॥ अग्निंत्रिः ॥ अग्निवरुणौ द्विः ॥ इंद्रंद्विः ॥ त्र्यंबकं ॥ विष्णुं ॥ अग्निं ॥ वायुं ॥ सूर्यं ॥ बृहस्पतिं ॥ वरुणं ॥ इंद्रं ॥ विश्वान्दे

वान् ॥ प्रत्येकमाज्येन ॥ सꣳस्रावहोमे ॥ वसून्रुद्रानादित्यान्त्सꣳस्रावाज्येन ॥ एतादेवताःसद्योयक्ष्ये ॥
ॐभूर्भुवःसुवःस्वाहा ॥ समिधोग्नावाधाय ॥ प्रजापतयइदंनममेतित्यागः ॥ एषहिदेवःप्रदिशोनुसर्वाःपू
र्वोहिजातःसउगर्भेअंतः ॥ सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखास्तिष्ठतिविश्वतोमुखः ॥ इत्यग्नि
माचारात्संमुखीकृत्य ॥ यथाहतद्वसवोगौर्यंचित्पदिषितामंमुंचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्यꣳहःप्रा
तार्यग्नेप्रतरान्नआयुः ॥ इतिहस्तेनईशानीमारभ्यसर्वतःपरिसमुह्य ॥ इदमाचारात् ॥ ततःप्रागादिक्रमेण
सर्वतःप्रागग्रैर्दर्भैरग्निपरिस्तीर्य ॥ अथवाप्राक्पश्चादुदगग्रान्दक्षिणतउत्तरतश्चप्रागग्रान् ॥ दक्षिणानुत्त
रान्करोत्युत्तरानधरांश्चकृत्वाप्रदक्षिणमग्निंपरिस्तीर्यदक्षिणतोब्रह्मायतनेकुशानास्तीर्य ॥ सकुशंदाक्षिणहस्तंत्व
दिकृत्वात्मीयमग्निमात्मनिध्यायति ॥ ॐमयिगृण्हाम्यग्रेअग्निꣳरायस्पोषायसुप्रजास्त्वायसुवीर्याय ॥ मयि
प्रजांमयिवर्चोदधाम्यरिष्टाःस्यामतनुवासुवीराः ॥ योनोअग्निःपितरोहृत्स्वंतरमर्त्योमर्त्याꣳआविवेश ॥ त
मात्मन्परिगृण्हीमहेवयंमासोअस्माꣳअवहायपरागात्इति ॥ ततउत्तरेणाग्निंदर्भानास्तीर्यपात्रासादनंकार्यं
अत्रस्थालीपाकसमावर्तनाष्टकादिदैवमानुषपित्र्यसर्वस्मार्तकर्मसुसकृदेवपात्राणिसादयेत् ॥ येतुद्वंद्वंसहए
कैकमितिदैवमानुषपित्र्यभेदेनविदधिरेतत्तुश्रौतविषयमेव ॥ स्मार्तेतुसकृदेवसर्वाणी।तिएवकारसर्वशब्दयो
विंधानात्सहैव ॥ सर्वाणियथासंभवंवाउदक्संस्थान्यासादयति ॥ दर्वीमाज्यस्थालींप्रणीतांप्रोक्षणीमिध्मंब

र्हिरुपवेषःसमार्गदर्भानवज्वलनदर्भानाज्यंचासादयामि ॥ इतिसाधारणानि ॥ यवसर्षपगोदधिद्रप्सवटांकु
ररसादीनिप्रकृतोपयोगीनिचासाद्य॥ईशान्यांप्रवरगोत्रनामोपेतंयुजर्वेदस्यतैत्तिरीयशाखांतर्गतहिपरण्यकेशी
शाखाध्य।यिनममुकशर्माणममुककर्मणिब्रह्माणंत्वामहंवृणइतिवृणुयात् ॥ ब्रह्मावृतोस्मीत्युक्त्वाचम्योत्तरेण
पात्राणिअपरेणाग्निंदक्षिणातिक्रम्यब्रह्मसदनात्तृणंनिरस्यापउपस्पृश्याग्निमभिमुखउपविशति ॥ ब्रह्माभावेकू
र्चंयज्ञोपवीतंदंडंकमंडलुंवास्थापयेत्।द्वौदर्भौसमौसाग्रौअंतर्गर्भरहितौप्रादेशपरिमितौपवित्रेकृत्वानखादन्ये
नछित्त्वाप्रणीतापात्रंत्रिःप्रक्षाल्यप्रागग्रपवित्रांतर्हितमद्भिःपूरयित्वापवित्रमुदगग्रंकरयोरंगुष्ठोपकनिष्ठिकाभ्यां
धृत्वात्रिरुत्पूयदक्षिणोत्तराभ्यांपाणिभ्यांसमंप्राणैर्धृत्वाअभिषिंचन्नग्नेर्दक्षिणतोहृत्वाउत्तरेणाग्निंदर्भेषुनिधायद
र्भैरपिधाय।पवित्रेप्रोक्षणीपात्रेउदगग्रेन्यस्याद्भिरापूर्यपूर्ववत्त्रिरुत्पूयपात्राण्युत्तानानिकृत्वाइध्मंविस्रस्यप्राक्सं
स्थंत्रिःसर्वाभिःप्रोक्षति।तेपवित्रेआज्यपात्रेनिदध्यात्।ततोदर्वीमग्नौनिष्टप्यसंमार्गकुशानादायदर्वींप्राचीमग्रैरं
तरतोभ्याकारंप्रतीचीमध्यैर्बाह्यतोमूलैर्दडंसंमृज्यपुनर्निष्टप्यापरेणाग्निंदर्भेषुनिधाय।संमार्गदर्भानभ्युक्ष्याग्नावा
धायाज्यंविलाप्यपवित्रांतर्हितायामाज्यस्थाल्यामाज्यंनिरूप्योपवेषेणाग्न्यायतनादुत्तरतोंगारान्कृत्वातेष्वाज्य
स्थालीमाधिश्रित्यदर्भैराज्यमवद्योत्यसजलंदर्भाग्रद्वयंआज्येन्यस्यप्रज्वालितैर्दर्भैरवाक्ज्वालैस्त्रिःपर्यग्निकृत्वा
उल्मुकंनिरस्यापउपस्पृश्योत्तरतआज्यमुद्वास्यांगारानायतनेप्रत्यूह्यापरेणाग्निंबर्हिरास्तीर्यतत्राज्यंनिधायपुन
राहारंत्रिरुत्पूय॥पश्चादारभ्यप्राङ्नीत्वोत्पूयनिमज्यपश्चादानयतीत्येवंत्रिःकृत्वापवित्रेप्रोक्ष्याग्नावाधायपरिधिम

परेणाग्निंस्थूलंषट्त्रिंशदंगुलंउदगग्रंनिधाय ॥ दक्षिणेनाग्निमष्टाविंशदंगुलंप्रागग्रंमध्यमेनसंस्पृष्टं ॥ उत्तरेणा
ग्निंचतुस्त्रिंशदंगुलंप्रागग्रंपरिस्तरणोपरिपरिस्तरणवत्परिदधाति ॥ इतिपरिधिपरिधानांतंकृत्वा ॥ यजमानोभा
र्यान्वारब्धःसन्परिधिदेशाद्बहिःपरिषिंचति ॥अदितेनुमन्यस्व॥दक्षिणतःप्राक्संस्थं ॥अनुमतेनुमन्यस्व॥पश्चा
दुदक्संस्थं ॥ सरस्वतेनुमन्यस्व ॥ उत्तरतःप्राक्संस्थं ॥ देवसवितःप्रसुवेतीशान्यादिऐशान्यंतंसर्वतः
प्रदक्षिणंपरिषिंचति ॥ ततोदर्व्याऽऽज्यमादायेध्ममभिघार्य ॥ ॐअयंतइध्मआत्माजातवेदस्तेनेध्यस्ववव
र्धस्व चेंधिवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्येनसमेधयस्वाहा ॥ इतिहस्तेनेध्मंजुहोति ॥ जात
वेदसेग्नयइदंनमम ॥ ततोदर्व्याऽऽज्यस्थालीस्थमाज्यमादायोत्तरपरिधिसंधिमभिलक्ष्यप्राग्दक्षिणापवर्गंसंत
तमग्न्यायतनेजुहोति ॥ प्रजापतयेमनवेस्वाहेतिमनसामंत्रमुच्चारयेत् ॥ प्रजापतयेमनवइदं॰ दक्षिणंपरिधि
संधिमभिलक्ष्यप्रागुदगपवर्गंसंततमग्न्यायतनेइंद्रायस्वाहेतिपठन्जुहोति ॥ इंद्रायेदं॰ ॥ इत्याघारौहुत्वा ॥
ततअग्नेरुत्तरार्धपूर्वार्धे ॥ अग्नयेस्वाहा ॥ अग्नयइदं॰ ॥ दक्षिणार्धपूर्वार्धे ॥ सोमायस्वाहा ॥ सोमायेदं॰॥
इत्याज्यभागौहुत्वा ॥ ततआज्यभागयोर्मध्येवक्ष्यमाणाआहुतीर्जुहोति ॥ अथसामान्यप्रधानहोमः ॥ यु
क्तोवहजातवेदःपुरस्तादग्नेविद्धिकर्मक्रियमाणंयथेदं ॥ त्वंभिषक्भेषजस्यासिकर्त्तात्वयागाऽश्वान्पुरुषान्त्स
नेमस्वाहा ॥ जातवेदसेऽग्नयइदं॰ ॥ ॰यातिरश्चीनिपद्यसेहंविधरणीइति ॥ तांत्वाघृतस्यधारयाग्नौसंराध
नीयजेस्वाहा ॥ संराधन्याइदं॰ ॥ संराधन्यैदेव्यैस्वाहा ॥ संराधन्यैदेव्याइदं॰ ॥ प्रसाधन्यैदेव्यैस्वा

हा ॥ प्रसाधन्यैदेव्याइदं ० भूःस्वाहा॥ अग्नयइदं ०॥भुवःस्वाहा॥वायवइदं ॥सुवःस्वाहा॥सूर्यायेदं ०॥भूर्भुवः सुवःस्वाहा ॥ प्रजापतयइदं ०॥ इतिसामान्यप्रधानहोमः॥अथप्रधानहोमः ॥ ॐधातादंदातुनोरयिमीशानो जगंतस्पतिः ॥ सनःपूर्णेनवावनत्स्वाहा ॥ धात्रइदं ० ॥ धाताप्रजायाउतरायईशेधातेदंविश्वंभुवनंजजान ॥ धातापुत्रंयजमानायदातातस्माउहव्यंघृतवद्विधेमस्वाहा ॥ धात्रइदं ० ॥ धातादंदातुनोरयिंप्राचीं जीवातुमक्षितां ॥ वयंदेवस्यधीमहिसुमति ँ सत्यराधसःस्वाहा ॥ धात्रइ ० ॥ धातादंदातुदाशुषेवसूनिप्र जाकामायमीढुषेदुरोणे ॥ तस्मैदेवाअमृताःसंव्ययंतांविश्वेदेवासोअदितिःसजोषाःस्वाहा ॥ धात्र० ॥ अ थांगहोमः ॥ ॐइमंमेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचकेस्वाहा ॥ वरुणायेदं ० ॥ तत्वायामि ब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुश ँ समानआयुःप्रमोषीःस्वाहा वरुणायेदं ० ॥ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठा ः॥ यजिष्ठोवन्हितमःशोशुचानोविश्वाद्वे षां ँ सिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्नीवरुणाभ्यामिदं ० ॥ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्यु ष्टौ ॥ अवयक्ष्वनोवरुण ँ रराणोवीहिमृडीक ँ सुहवोनएधिस्वाहा ॥ अग्नीवरुणाभ्यामिदं ० ॥ त्वमग्नेअ यास्ययासन्मनसाहितः ॥ अयासन्हव्यमूहिषेयानोधेहिभेषज ँ स्वाहा॥ अयसेग्नयइदं ०॥ प्रजापतेनत्वदे

तान्यन्योविश्वांजातानिपारिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवय ँ स्यामपतयोरयीणा ँ स्वाहा ॥
प्रजापतयइदं॰ ॥ अथजयाद्युपहोमः ॥ चित्तंचस्वाहा ॥ चित्तायेदं॰ ॥ चित्तिश्चस्वाहा ॥ चित्तयइदं॰
 आकूतंचस्वाहा ॥ आकूतायेदं॰ आकूतिश्चस्वाहा ॥ आकूत्याइदं॰ ॥ विज्ञातंचस्वाहा ॥ विज्ञातायेदं॰
विज्ञानंचस्वाहा ॥ विज्ञानायेदं॰ ॥ मनश्चस्वाहा ॥ मनसइदं॰ ॥ शक्करीश्चस्वाहा ॥ शक्करीभ्यइदं॰ ॥
दर्शश्चस्वाहा ॥ दर्शायेदं॰ ॥ पूर्णमासश्चस्वाहा॥ पूर्णमासायेदं॰ ॥ बृहच्चस्वाहा ॥ बृहतइदं॰ ॥ रथं
तरंचस्वाहा ॥ रथंतरायेदं॰ ॥ प्रजापतिर्जयानिंद्रायवृष्णेप्रायच्छदुग्रः पृतनाज्येषुतस्मैविशःसमनमंतसर्वाः
सउग्रःसहिहव्योबभूवस्वाहा ॥ प्रजापतयइदं॰॥ इतिजयहोमः ॥ अथाभ्यातानहोमः ॥ ॐअग्निर्भूताना
मधिपतिःसमावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्या ँ स्वाहा ॥ अ
ग्नयेभूतानामधिपतयइदं॰ ॥ इंद्रोज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्र॰त्या ँ स्वाहा ॥ इंद्रायज्येष्ठानामधि
पतयइ॰ ॥ यमःपृथिव्याअधिपतिःसमावत्वस्मिन्ब्र॰त्या ँ स्वाहा ॥ यमायपृथिव्याअधिपतयइ॰ ॥ वा
युरंतरिक्षस्याधिपतिःसमावत्वस्मिन्ब्र॰ ॥ वायवेअंतरिक्षस्याधिपतयइ॰ ॥ सूर्योदिवोधिपतिःसमावत्वस्मि 
न्ब्र॰त्या ँ स्वाहा ॥ सूर्यायदिवोधिपतयइदं॰॥ चंद्रमानक्षत्राणामधिपतिःसमा॰त्या ँ स्वाहा ॥ चंद्रमसे

नक्षत्राणामधिपतयइदं० ॥ बृहस्पतिर्ब्रह्मणोधिपतिःस० हां ॥ बृहस्पतयेब्रह्मणोधिपतयइदं० ॥ मित्रःस
त्यानामधिपतिःस० हां ॥ मित्रायसत्यानामधिपतयइदं० ॥ वरुणोपामधिपतिःसमांव० हां ॥ वरुणाया
धिपतयइदं० ॥ समुद्रःस्रोत्यानामधिपतिःस० हां ॥ समुद्रायस्रोत्यानामधिपतयइदं० ॥ अन्न ँ साम्रा
ज्यानामधिपतितन्मांव० हां ॥ अन्नायसाम्राज्यानामधिपतयइ० ॥ सोमओषधीनामधिपतिःसमांव० हां ॥
सोमायओषधीनामधिपतयइदं० ॥ सविताप्रसवानामधिपतिःसमांव० हां ॥ सावित्रेप्रसवानामधिपतयइदं० ॥
रुद्रःपशूनामधिपतिःसमांवत्व० हां ॥ रुद्रायपशूनामधिपतयइदं ॥ उदकस्पर्शः ॥ त्वष्टारूपाणामधिपतिःस०
हां ॥ त्वष्ट्रेरूपाणामधिपतयइदं० ॥ विष्णुःपर्वतानामधिपतिःसमांवत्व० हां ॥ विष्णवेपर्वतानामधिपतयइ० ॥
मरुतोगणानामधिपतयस्तेमांवंत्व० हां ॥ मरुद्भ्योगणानामधिपतिभ्यइदं० ॥ प्राचीनावीतीपितरःपितामहाः
परेवरेततास्ततामहाइहमांवत॥अस्मिन्ब्रह्मन्नस्मिन्क्षत्रेस्यामाशिष्यस्यांपुरोधायामस्मिन्कर्मन्नस्यांदेवहूत्या ँ
स्वाहा ॥ इतिजुहोत्युपतिष्ठतेवा ॥ उपस्थानपक्षेनान्वाधानेउत्कीर्तनं ॥ पितृभ्यः पितामहेभ्यःपरेभ्यो
वरेभ्यइदं० ॥ यज्ञोपवीत्यपउपस्पृश्य ॥ अथराष्ट्रभृतः ॥ त्रिविधोराष्ट्रभृतांमंत्राणांविभागः ॥ ऋताषाडि
तियथापाठमारभ्यतस्मैस्वाहेत्यंतापूर्वाहुतिः ॥ ताभ्यःस्वाहेत्येतावत्येवापरा ॥ इत्येकःपक्षः ॥ ऋताषाड्

तधामाग्निर्गंधर्वः सइदं ब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ तस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपातुभ्यःस्वाहा ॥ इत्येवमपरः ॥ ऋताषाडितियथापाठंपठित्वातस्मैस्वाहेत्युक्त्वापूर्वाहुतिः ॥ पुनर्यथापाठंपठित्वाताभ्यःस्वाहेत्युक्त्वाउत्तराहुतिः ॥ इत्येवंतृतीयः ॥ पक्षत्रयेपिदशभिःपर्यायैर्विंशतिर्मंत्राः ॥ सप्तमोत्तमावेकैकाहुतिकावितिद्वाविंशतिर्मंत्राः। ऋताषाडृतधामाग्निर्गंधर्वःसइदंब्रह्मक्षत्रंपातुतस्मैस्वाहा ॥ ऋतसहेऋतधाम्नेअग्नयेगंधर्वायेदं० ॥ तस्यौषधयोप्सरसऊर्जोनामताइदंब्रह्मक्षत्रंपातुताभ्यः स्वाहा ॥ ओषधीभ्योप्सरोभ्यऊर्ग्भ्यइदं०॥ स ऽ हितोविश्वसामासूर्योगंधर्वःस० तस्मैस्वाहा ॥ स ऽ हितायविश्वसाम्नेसूर्यायगंधर्वायेदं० ॥ तस्यमरीचयोप्सरसआयुवोनामता० पातुता० हा ॥ मरीचिभ्योप्सरोभ्यआयुभ्यइदं० ॥ सुषुम्नःसूर्यरश्मिश्चंद्रमागंधर्वःसइ० ॥ पातुत० सुषुम्नायसूर्यरश्मयेचंद्रमसेगंधर्वायेदं०॥ तस्यनक्षत्राण्यप्सरसोबेकुरयोनामता० पातुता० नक्षत्रेभ्योप्सरोभ्योबेकुरिभ्यइदं० ॥ भुज्युःसुपर्णोयज्ञोगंधर्वःस० पातुत० भुज्यवेसुपर्णाययज्ञायगंधर्वायेदं० ॥ तस्यदक्षिणाअप्सरसस्तवानामता० पातुता० दक्षिणाभ्योप्सरोभ्यस्तवाभ्यइदं० ॥ प्रजापतिर्विश्वकर्मामनोगंधर्वःस० पातुत० प्रजापतयेविश्वकर्मणेमनसेगंधर्वायेदं० ॥ तस्यर्क्सामान्यप्सरसोवन्हयो

नामता॰ पांतुता॰ हां॥ ऋक्सामेभ्योप्सरोभ्योवन्हिभ्यइदं॥ इषिरोविश्वव्यंचावातोगंधर्वःस॰ पांतुत॰ हां॥ इषिरायविश्वव्यचसेवातायगंधर्वायेदं॰॥ तस्यापोप्सरसोमुदानामता॰ पांतुता॰ हां॥ अद्भ्योप्सरोभ्योमुदाभ्यइदं॰॥ भुवनस्यपतेयस्यंतउपरिगृहाइहच॥ सनोरास्वाज्यानिंरायस्पोषंसुवीर्यंसंवत्सरीणांस्वस्तिस्वाहा॥भुवनस्यपत्यइदं॰॥ परमेष्ठ्यधिपतिर्मृत्युर्गंधर्वःसइ॰ पांतुत॰ हां॥ परमेष्ठिनेधिपतयेमृत्यवेगंधर्वायेदं॰॥ तस्यविश्वंमप्सरसोभुवोनामता॰ पांतुता॰ हां॥ विश्वस्माअप्सरोभ्योभूभ्यइदं॰॥ सुक्षितिःसुभूतिर्भद्रकृत्सुवर्वान्पर्जन्योगंधर्वःस॰ पांतुत॰ हां॥ सुक्षितयेसुभूतयेभद्रकृतेसुवर्वतेपर्जन्यायगंधर्वायेदं॰॥ तस्यंविद्युतोप्सरसोरुचोनामता॰ पांतुता॰ हां॥ विद्युद्भ्योप्सरोभ्योरुग्भ्यइदम्॥ दूरेहेतिरमृडयोमृत्युर्गंधर्वःस॰ पांतुत॰ हां॥ दूरेहेतयेअमृडयायमृत्यवेगंधर्वायेदं॰॥ तस्यप्रजाअप्सरसोभीरुवोनामता॰ पांतुता॰ हां॥ प्रजाभ्योप्सरोभ्योभीरुभ्यइदं॰॥ चारुःकृपणकाशिकामोगंधर्वःस॰ पांतुत॰ हां॥ चारवेकृपणकाशिनेकामायगंधर्वायेदं॰॥ तस्याधयोप्सरसःशोचयंतीर्नामता॰ पांतुता॰ हां॥ आधिभ्योप्सरोभ्यःशोचयंतीभ्यइदं॰॥ सनोभुवनस्यपतेयस्यंतउपरिगृहाइहच॥ उरुब्रह्मणेस्मैक्षत्रायमाहि

शर्मयच्छस्वाहा ॥ भुवनस्यपत्यइ॰ ॥ ऋताषाट्स ँ हितःसुषुम्नोभुज्युःप्रजापतिरिषिरोभुवनस्यपरमेष्ठी सुक्षितिर्दूरेहेतिश्चारुःसनोभुवनस्येतिदशभिःपर्यायैःसहद्वाविंशतीराष्ट्रभृतइत्युपहोमः ॥ यदस्यकर्मणोत्यरीरिचंयद्वान्यूनमिहाकरं॥अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वँ स्विष्टँ सुहुतंकरोतुमे॥अग्नयेस्विष्टकृतेसुहुतहुतेसर्वहुतआहुतीनांकामानाँ समर्धयित्रेस्वाहा ॥ अग्नेरुत्तरार्धस्यपूर्वार्धेऽतिहायहोमाहुतीर्जुहोति ॥ अग्नयेस्विष्टकृतइदं॰ ॥ ततइध्मसन्नहनंतूष्णीमग्नौप्रास्यदर्व्यापरिधीननक्ति ॥ मध्यमंदक्षिणमुत्तरंच ॥ ततोयथाहृतद्वंसवोगौर्यमित्यग्निंपारिसमुह्यबर्हिर्भ्यःपरिस्तरणेभ्यश्चकानिचित्तृणान्यादायदर्व्यामग्राण्यनक्ति ॥ मध्यंमूलंचाज्यस्थाल्यांएवंद्वितीयेतृतीयेतुमूलानिमध्यंचाज्यस्थाल्यांदर्व्यामग्राणि ॥ ततश्चैकंतृणमवस्थाप्योत्तरंपरिधिसंधिमनुप्रहृत्यात्रिरंजलिनोर्ध्वसंयौति ॥ ततआत्तंतृणंप्रहृत्यांगुल्यात्रिर्निर्दिश्य घ्राणंचक्षुःपृथिवींचालभ्यापउपस्पृश्य ॥ परिधिंमध्यममग्नौप्रहृत्यसहेतरौप्रहरतिमध्यमंमध्येकरोति ॥ ॥ ॥ ॥ ६ ॥

## ॥ ४७ ॥ ॥ अथ प्रायश्चित्तहोम प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ कृतस्यकर्मणोन्यूनातिरिक्तजन्यदोषपरिहारार्थंप्रायश्चित्तंजुहुयात् ॥ ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियतेमिथु ॥ अग्नेतदस्यकल्पयत्वँ हिवेत्थयथातथँ स्वाहा ॥ अग्नयइदं॰ ॥ पुरु

षसंमितोयज्ञोयज्ञःपुरुषसंमितः ॥ अग्नेतदस्यकल्पयत्व ँ हिवेत्थयथातथ ँ स्वाहा ॥ अग्नयइदं० ॥ य
त्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्तासः ॥ अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवा ँ ऋतुशोयजा
तिस्वाहा ॥ अग्नयइदं० ॥ त्वंनोअग्नेवरुणस्यविद्वान्देवस्यहेडोवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचा
नोविश्वाद्वेषा ँ सिप्रमुमुग्ध्यस्मत्स्वाहा ॥ अग्निवरुणाभ्यामिदं० ॥ सत्वंनोअग्नेवमोभवोतीनेदिष्ठोअस्याउ
षसोव्युष्टौ ॥ अवयक्ष्वनोवरुण ँ रराणोवीहिमृडीक ँ सुहवोनएधिस्वाहा ॥ अग्निवरुणाभ्यामिदं० ॥ यतं
इंद्रभयामहेततोनोअभयंकृधि ॥ मघवन्छग्धितवतन्नऊतयेविद्विषोविमृधोजहिस्वाहा ॥ इंद्रायेदं० ॥
स्वस्तिदाविशस्पतिर्वृत्रहाविमृधोवशी ॥ वृषेंद्रःपुरएतुनःस्वस्तिदाअभयंकरःस्वाहा ॥ इंद्रायेदं० ॥ त्र्यंबकं
यजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंधनान्मृत्योर्मुक्षियमामृतात्स्वाहा ॥ त्र्यंबकायेदं० इदंवि
ष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपा ँ सुरेस्वाहा ॥ विष्णवइदं० ॥ भूःस्वाहा ॥ अग्नयइदं० ॥
भुवःस्वाहा ॥ वायवइदं० ॥ सुवःस्वाहा ॥ सूर्यायेदं० ॥ महःस्वाहा ॥ बृहस्पतयइदं० ॥ जनःस्वाहा
वरुणायेदं० ॥ तपःस्वाहा ॥ इंद्रायेदं० ॥ सत्य ँ स्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ वसुभ्योरुद्रेभ्यआ
दित्येभ्यःस्वाहा ॥ वसुभ्योरुद्रेभ्यआदित्येभ्यःस ँ स्रावभागेभ्यइदं० ॥ ततउत्तरपरिषेकः ॥ अदितेन्व

 मꣳस्थाः ॥ अनुमतेन्वंमꣳस्थाः ॥ सरस्वतेन्वंमꣳस्थाः ॥ देवंसवितःप्रासावीरितिपूर्ववत्परिषेकेणवि 
सर्गंकृत्वा ॥ यथेतंप्रणीताः पर्याहृत्याऽपरेणाग्निंनिधाय ॥ सदंसिसन्मेभूयाःसर्वमसिसर्वंमेभूयाःपूर्णमं
 सिपूर्णंमेभूयाअक्षितमसिमामेक्षेष्ठाः ॥ प्राच्यांदिशिदेवाऋत्विजोमार्जयंतां ॥ दक्षिणायांदिशिमासाःपितरो
मार्जयंतां ॥ अपःस्पृष्ट्वा ॥ प्रतीच्यांदिशिगृहाःपशवोमार्जयंतां ॥ उदीच्यांदिश्यापओषधयोवनस्पतयो
मार्जयंतां ॥ उर्ध्वायांदिशियज्ञःसंवत्सरोयज्ञपतिर्मार्जयतां ॥ इतिप्रागारभ्यदिक्चतुष्टयेऊर्ध्वमधश्चजलमा
सिच्य ॥ समुद्रंवःप्रहिणोम्यक्षिताःस्वांयोनिमपिगछत ॥ अछिद्रःप्रजयाभूयासंमापरासेचिमत्पयः ॥
इतिभूमौनिनीयात्मानंमार्जयित्वामुखंसंमृज्य ॥ यथाश्रद्धंब्रह्मणेदक्षिणांदद्यात् ॥ इदंपूर्णपात्रंतत्प्रतिनिधि
भूतंवायथाशक्तिहिरण्यंब्रह्मणेसंप्रददेइत्युक्त्वानममेतिवदेत् ॥ ब्रह्मास्वस्तीत्युक्त्वायथेतंप्रतिनिष्क्रामति ॥
ततःसंस्थाजपेनोपतिष्ठते ॥ यज्ञनमस्तेयज्ञ ॥ नमोनमश्चतेयज्ञ ॥ शिवेनंमेसंतिष्ठस्वस्योनेनंमेसंतिष्ठस्वसु
भूतेनंमेसंतिष्ठस्वब्रह्मवर्चसेनंमेसंतिष्ठस्वयज्ञस्यर्धिमनुसंतिष्ठस्वोपतेयज्ञनमउपतेनमः ॥ इदमिध्मसंनहनप्र
हरणादिकंआघारवतिदर्विहोमेगृह्यांतरेदृष्टत्वेनवृत्तिकृदुक्तेःशिष्टपरिगृहीतत्वाच्चकर्तव्यं ॥ यावदुक्तमेवस्वगृ 
ह्योक्तंकर्तव्यमितिवदंतःकेचिन्नेच्छंति ॥ केचिन्निरूढदर्विहोमानंतरंकुर्वंति ॥ ॥ ७ ॥ ॥ ७ ॥

तःकर्ताऽपरेणाग्निमुपरिबद्धशुभ्रवर्तुलवितानस्याधोदेशेभार्यांप्राङ्मुखीमुपवेश्य ॥ तस्यादक्षिणहस्तेयवंनिद
धाति । वृषासीति ॥ ततःसकृदुक्तेनमंत्रेणयवस्यदक्षिणतउत्तरतश्चसर्षपौनिदधाति। आंडौस्थइति॥ तदुप
रिगावंदधिद्रप्संनिदधाति॥श्वावृत्तदिति॥ततस्तूष्णींप्राशयति॥कृतशुद्धाचमनायास्तस्याउदरंहस्ताभ्यामभिमृ
शति॥अभिष्ठ्वाहंदशभिरभिमृशामिशमास्यायसूतवैइति ॥ अत्रन्यूनाधिकांगुलेःकर्तुर्दशभिरितिपदंलुप्यते ॥
स्मार्ताग्न्युपस्थानेगार्हपत्यपदलोपवत् ॥ ततोवटांकुररसंघृतेनसांमिश्रंकृत्वाकृतस्वोरुमूलोपधानायास्तस्या
दक्षिणेनासापुटेतूष्णींसेचयेत् ॥ ततोविभूतिंधृत्वा ॥ कृतस्यकर्मणःसांगतासिद्ध्यर्थंदशाधिकान्ब्राह्मणान्य
थाकालंयथोपपन्नेनान्नेनभोजयिष्येइतिसंकल्प्य ॥ पुनःकर्मसांगतासिद्ध्यर्थंगंधतांबूलादिभिर्ब्राह्मणपूजनं
भूयसींदक्षिणांचदातुमहमुत्सृज्येइतिसंकल्प्यगंधादिनासंपूज्यदक्षिणांदद्यात् ॥ ततःप्रमादात्कुर्वतांकर्मेति
विष्णुंस्मरेत् ॥ ततोब्राह्मणेभ्योमंत्रोक्ताआशिषोग्राह्याः ॥ आशिषमेवैतामाशास्तइत्याद्याः ॥ ततोब्राह्मणा
न्नमस्कृत्यशिष्टैरिष्टैश्चसहभोजनंकुर्यात् ॥ इतिसत्याषाढहिरण्यकेशीस्मार्तप्रयोगरत्नेवैशंपायनमहेशभट्टकृ
तौपुंसवनप्रयोगःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ४१ ॥ ॥ अथ गर्भस्रावेस्तंभनाविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ आर्द्रेणपाणिनामंत्रावृत्यानाभेरूर्ध्वंत्रिरुन्मार्ष्टि ॥ परांचंत्वानार्वांचंत्वष्टाबध्नातुबंध
ने ॥ सकृत्तूनुपवेश्यदशमासोअवीरहेति ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ८० ॥ ॥ अथ सीमंतोन्नयनप्रयोग प्रारंभः



श्रीगणेशायनमः ॥ ॥ चतुर्थेमासिषष्ठेष्टमेनवमेवामासिशुक्लपक्षेरविगुरुशुक्रवारेषुपुनर्वसुपुष्याभिजि द्धस्तप्रोष्ठपदानूराधाश्विनीमूलश्रवणरेवतीरोहिणीमृगसंज्ञकपुन्नक्षत्रेषुमध्यपादद्वयेषष्ठ्यष्टमीद्वादशीचतुर्द श्यमावास्यादिव्यतिरिक्तशुभलग्नादौकार्यं ॥ यजमानःकृतावश्यकक्रियःवस्त्राच्छादितेपीठेप्राङ्मुखउपवि श्यस्वदक्षिणतःपत्नीमुपवेश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यममास्यांभार्यायांविद्यमानगर्भस्यबैजिक गार्भिकदोषपरिहारद्वाराक्षेत्रसंस्कारद्वाराचश्रीपरमेश्वरप्रीत्यर्थंसीमंतोन्नयनाख्यंकर्मकरिष्ये ॥ तदंगंगणप तिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्यइतिसंकल्पोक्तरीत्याकुर्यात् ॥ सीमंतोन्नयनांग त्वेनोद्धननादिभूसंस्कारंविधायतत्रमंगलनामानमौपासनाग्निंप्रतिष्ठाप्यायतनस्थेतुमंगलनाम्नाभावयित्वाग्निंप्र ज्वाल्यसमित्त्रयमादायश्रद्धएहीत्यादिसामान्यप्रधानांतमुक्त्वाप्रधानहोमे ॥ धातारंचतुराज्येनांगहोमेवरुणं द्विरित्यादिसामान्यप्रधानांतंहुत्वाततोधाताददातुनोरयिमित्यादिप्रधानाहुतिचतुष्टयंहुत्वासंस्थाजपांतंसर्वंसमा प्यत्रिवृदन्नहोमंबलिकरणांतंकृत्वापुण्याहवाचनंकुर्यात् ॥ ततस्तामपरेणाग्निंपूर्ववन्मंडलवितानस्याधोदेशे प्राङ्मुखीमुपवेश्यत्रेण्याशलल्यासहोदुंबरस्तबकमुपसंगृह्यतस्याःपुरस्तात्प्रत्यङ्मुखास्तिष्ठन्सीमंतमुन्नयेत् ॥

ॐ भूर्भुवःसुवः ॥ राकामह ँ सुहवा ँ सुष्टुतीहुवेशृणोतुनःसुभगाबोधतुत्मना ॥ सीव्यत्वपःसूच्याच्छिद्य मानयाददातुवीर ँ शतदायमुक्थ्यं ॥ यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि ॥ ताभिर्नोअद्य सुमनाउपागहिसहस्रपोष ँ सुभगेरराणाइतिद्वाभ्यां ॥ ततःसीमंतमभिमंत्रयति ॥ सोमएवनोराजेत्याहुर्ब्रा ह्मणीःप्रजाविवृत्तचक्राआसीनास्तीरेतुभ्यंगंगे ॥ विश्वाउतत्वयावयंधाराउदन्याइव ॥ अतिगाहेमहिद्विषं इति ॥ अत्रमंत्रस्थंगंगापदंत्यक्त्वायस्यानद्याःसमीपेनिवासस्तन्नामसंबुध्यंतंप्रक्षिपेत् ॥ ततोब्राह्मणभोजनं भूयसींदक्षिणांचसंकल्प्यदद्यात् ॥ ततआशिषोवाचयित्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ॥ छ ॥

## ॥ ५१ ॥ ॥ अथ पुंसवनसीमंतयोस्तंत्रप्रयोग प्रारंभः ॥

देशकालौसंकीर्त्यममास्यांभार्यायांविद्यमानगर्भस्यबीजगर्भसमुद्भवैनोनिबर्हणद्वाराक्षेत्रसंस्कारद्वाराचश्रीपर मेश्वरप्रीत्यर्थंपुंसवनसीमंतोन्नयनेतंत्रेणकरिष्येइतिसंकल्प्य ॥ पुंसवनसीमंतोन्नयनकर्मणोरित्यन्वाधानं ॥ ग णेशपूजनादित्रिवृदन्नहोमंपुण्याहवाचनांतंचसर्वंसकृदेवकुर्यात् ॥ संप्रतिपन्नदेवताकत्वाद्द्वैशेषिकधात्रीचतु ष्टयहोमस्यापिनावृत्तिः ॥ भार्यांशुभ्रवर्तुलवितानस्याधोदेशेउपवेश्यदधिद्रप्सप्राशनादिसीमंतोन्नयनादिकंच पृथक्पृथक्कुर्यात् ॥ इतिसत्याषाढहिर० तौपुंसवनसीमंतयोस्तंत्रप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ५२ ॥ अथक्षिप्रप्रसवविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ सूतिकायाःशिरःसमीपेउदकुंभंनिदधाति ॥ पादयोःसमीपेतूर्यंतींनिधायतूष्णीमुदरंस्पृष्ट्वार्द्रेणपाणिनानाभेरधस्त्रिरवाङ्मंत्रावृत्त्यावमार्ष्टि ॥ यथैववायुःपवतेयथासमुद्रएजति ॥ एवंतेगर्भएजतुसहजरायुणावसर्पत्विति ॥

## ॥ ५३ ॥ अथ जातकर्मप्रयोग प्रारंभः ॥

जातमात्रेपुत्रेपितातस्यमुखंनिरीक्ष्यनद्यादौस्नात्वाऽसंभवेशीताभिरद्भिःसुवर्णयुताभिर्गृहेवास्नात्वासितचंदनमाल्यादिभिरलंकृतोनालच्छेदनात्प्राक् ॥ अश्मानंपरशुंसुवर्णंसर्षपान्कणांश्चोष्णशीताअपगोधृतमुदकुंभंचसंभृत्यप्राङ्मुखउपविश्याचम्यप्रणानायम्यदेशकालौसंकीर्त्यममास्यकुमारस्यगर्भांबुपानजनितसकलदोषनिबर्हणायुर्वर्चोभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंजातकर्मकरिष्ये ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंहिरण्येननांदीश्राद्धंचकरिष्येइतिसंकल्प्यकुर्यात् ॥ ततोश्मानिपरशुंतदुपरिहिरण्यंचनिधायतानिव्यत्यस्तानिकृत्वातदुपरिकुमारंसम्यक्प्रक्षालितंहस्ताभ्यांप्राक्शिरसंधारयति ॥ अश्माभवपरशुर्भवहिरण्यमस्तृतंभव ॥ वेदोवैपुत्रनामासिजीवत्वं शरदःशतं ॥ अंगादंगात्संभवासिहृदया

दधिजायसे ॥ आत्मावैपुत्रनामासिसजीवशरदः शतमिति ॥ यद्यस्यांकश्चिज्जरायुभागास्तिष्ठातितदा अंजलि
नाउदकमादायमूर्धानमस्याअवसिंचाति ॥ तिलदेवपद्यस्वनमा ऽसमसिनोदलमवपद्यस्वस्यादिति ॥ नैमि
त्तिकमिदं ॥ तत औपासनाग्निंसूतिकागाराद्बहिःशुचौदेशेसंस्थाप्यतत्रएकंकपालंसंतप्तंकृत्वातस्मिन्‌शु
ष्कगोमयंप्रक्षिप्यप्रज्वाल्यैषउत्तपनीयः ॥ पचनाग्निर्वा ॥ तमुत्तपनीयमाग्निंसूतिकागारेसंस्थाप्यप्राङ्मुख
उपविश्यदेशकालौसंकीर्त्यास्यकुमारस्यशंडमर्कादिरक्षोगणेभ्यःसंरक्षणार्थंसर्षपमिश्रैःकणैःसायंप्रातरुत्धूप
नंभूम्यालंभनंचकरिष्येइतिसंकल्प्यपरिसमुह्यपरिस्तीर्यतूष्णींपरिषिच्यहस्तेनजुहुयान्नात्रत्यागः ॥ सायमे
वोपक्रम्यसायंप्रातर्दशाहंउत्धूपनंभूम्यालंभनंचबालरक्षणार्थंकर्तव्यं ॥ सायंसायंवा ॥ यदातुपचनाग्नावु
त्धूपनंतदातत्कालमेवोभेसकृदेवकर्तव्येइतिवृत्तिकृत् ॥ शंडोमर्कउपवीरःशांडिकेरउलूखलः ॥ च्यवनो
नश्यतादितःस्वाहा ॥ आलिखन्विलिखन्ननिमिषन्किंवदंतउपश्रुतिःस्वाहा ॥ अर्यम्णःकुंभीशत्रुःपात्रपा
णिर्निपुणिःस्वाहा ॥ आंत्रीमुखःसर्षपारुणोनश्यतादितःस्वाहा ॥ केशिनीश्वलोमिनीबजाबोजोपकाशिनी॥
अपेतनश्यतादितःस्वाहा ॥ कौबेरकाविश्ववासोरक्षोराजेनप्रेषिताः ॥ ग्रामान्तसजातयोयंतीप्संतःपरिजा
कृतान्त्स्वाहा ॥ एतान्हतैतान्बध्नीतेत्ययंब्रह्मणोदूतस्तानाग्निःपर्यसरत् ॥ तानिंद्रस्तान्बृहस्पतिस्तानहंवेदब्रा
ह्मणःप्रमृशतःकूटदंतान्विकेशान्लंबस्तनान्त्स्वाहा ॥ नक्तंचारिणउरस्पेशाञ्छूलहस्तान्कपालपान्त्स्वा
हा ॥ पूर्वएषांपितेत्युच्चैःश्राव्यकर्णकः ॥ माताजघन्यागच्छंतीग्रामेविधुरमिच्छंतीस्वाहा ॥ नक्तंचारिणी

स्वसासंधिनाप्रेक्ष्यतेकुलं ॥ यास्वपत्सुजागर्तियस्यैविजातायांमनःस्वाहा ॥ तासांत्वंकृष्णवर्त्मनेक्लोमा 
न ँ हृदयंयकृत्॥अग्नेयक्षिणीनिर्दहस्वाहेति ॥ एतैरेकादशाभिर्मंत्रैर्निर्धूमेष्वंगारेष्वावापेनकुमारमुत्धूपयेत्॥
 ततःपाणीप्रक्षाल्यभूमिमालभते ॥ यत्तेसुशीमेहृदयंदिविचंद्रमसिश्रितं ॥ तस्यामृतत्वस्यनोधेहिमाहंपौत्र
मघ ँ रुदं ॥ वेदतेभूमिहृदयंदिविचंद्रमसिश्रितं ॥ तथामृतत्वस्येशानोमाहंपौत्रमघ ँ रुदमिति ॥

## ॥ ५४ ॥ ॥ अथ मेधाजनन प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ देशकालौसंकीर्त्यास्यकुमारस्यधियोधारणाभिवृत्ध्यर्थंमेधाजननंकरिष्येइतिसंक
ल्प्य ॥ दर्भेणहिरण्यंबध्वातदंतर्धायप्राक्शिरसंकुमारंसंस्थाप्यप्रतिमंत्रंगोघृतंप्राशयाति ॥ प्राशनसूत्रेमंत्राणां
समुच्चयद्योतकपदाभावात् ॥ भूर्ऋचस्त्वयिजुहोमिस्वाहा ॥ भूवोयजू ँ षित्वयिजुहोमिस्वाहा ॥ सुवःसा
मानित्वयिजुहोमिस्वाहा ॥ भूर्भुवःसुवरथर्वांगिरसस्त्वयिजुहोमिस्वाहेति ॥नात्रत्यागः ॥इतिमेधाजननम्॥
ततःकुमारमुष्णशीताभिरद्भिःस्नापयाति ॥ क्षेत्रीयैत्वानिर्ऋत्यैत्वाद्रुहोमुंचामिवरुणस्यपाशात् ॥ अनागसंब्र
ह्मणेत्वाकरोमिशिवेतेद्यावापृथिवीउभेइमे ॥ शंतेअग्निःसहाद्भिरस्तुशंद्यावापृथिवीसहौषधीभिः ॥ शमंतरिक्ष 
ँ सहवातेनतेशंतेचतस्रःप्रदिशोभवंतु ॥ सूर्यमृतंतमसोग्राह्यायद्देवाअमुंचन्नसृजन्व्येनसः ॥ एवमहमि

मंक्षेत्रियाज्जामिशं सातुद्रुहोमुंचामिवरुणस्यपाशादिति ॥ ततःकुमारंमातुरुत्संगेआदधाति ॥ यादैवीश्च तस्त्रःप्रदिशोवातपत्नीरभिसूर्योविचष्टे ॥ तासांत्वाजरसआदधामिप्रयक्ष्मएतुनिर्ऋतिंपराचैरिति ॥ ततःकुमारमभिमंत्रयते ॥ मातेपुत्रं रक्षोहिं सीन्माधेनुरतिसारिणी ॥ प्रियाधनस्यभूयाएधमानास्वेवशइति ॥ ततोमंत्रावृत्त्यातूष्णींप्रक्षालितंदक्षिणंस्तनंसव्यंचपाययति ॥ अयंकुमारोजरांधयतुसर्वमायुरेतुतरनैस्तनंप्रप्यायस्वायुःकीर्तिर्वर्चोयशोबलमिति ॥ ततोमंत्रावृत्त्याउभौस्तनावभिमृशति ॥ नामयतिनरुदतियत्रवयंवदामोयत्रवाभिमृशामसीति ॥ ततोस्याःशिरःसमीपेउदकपूर्णपिहितमुखंकुंभंनिदधाति ॥ आपोगृहेषुजाग्रतयथादेवेषुजाग्रथ ॥ एवमस्यैसुपुत्रायैजाग्रतेति ॥ ततोजन्मलग्नेदुष्टस्थानस्थितग्रहजनितपीडानिरासार्थंदानजपादिकारयेत् ॥ ततोब्राह्मणेभ्योगोभूहिरण्यादियथाशक्तिदत्वागंधादिनासंपूज्यभूयसींदक्षिणांदत्वाशिषोवाचयेत् ॥ अग्नेतेजस्विन्नित्यादिमंत्रैः ॥ ततोनालच्छेदनादियथाचारंकार्यं ॥ इदंचरात्रौसंध्यायांग्रहणेजननमरणाशौचमध्येआशौचांतेवापितरिग्रामांतरगतेपितृव्यादिर्जातकर्मकुर्यात् ॥ इतिसत्याषाढहिंतौजातकर्मप्रयोगः ॥ ॥ ७ ॥ ॥ ॥ ॥ ७ ॥ ॥ ॥ ॥ ७ ॥

## ॥ ५५ ॥ ॥ अथ षष्ठी पूजा प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ पंचमेषष्ठेपिचदिनेपूर्वरात्रौपित्रादिराचम्यदेशकालौसंकीर्त्यसूतिकायाःशिशोश्च

सकलानिष्टशांतिद्वारायुरारोग्याभिवृद्धिद्वाराचश्रीपरमेश्वरप्रीत्यर्थंविघ्नेशजन्मदाषष्ठीदेवीजीवंतिकानांयथा
मिलितोपचारैःपूजनमहंकरिष्येइतिसंकल्प्यपूजनस्थानेपीठादौयथाचारंविघ्नेशादीनावाह्यषोडशोपचारैःपं
 चोपचारैर्वापूजयित्वाप्रार्थनाकार्या ॥ गौरीपुत्रोयथास्कंदःशिशुत्वेरक्षितःपुरा ॥ तथाममाप्ययंबालःषष्ठिकेर
क्ष्यतांनमः ॥ १ ॥ कार्तिकेयमहाबाहोगौरीहृदयनंदन ॥ कुमाररक्षभीतिभ्यःपाहिदेवनमोस्तुते ॥ २ ॥
शक्तिस्त्वंसर्वदेवानांलोकानांहितकारिणी ॥ मातर्बालमिमंरक्षमहाषष्ठिनमोस्तुते ॥ ३ ॥ ततःषष्ठीस्कंदभ
गवतीभ्यःमाषभक्तबलिंसपर्पयामि ॥ इतिबलिंदत्वाब्राह्मणानूगंधतांबूलदक्षिणादिभिःसंपूज्याशिषोवाच
यित्वास्वसंबंधिबांधवादिभिःसहापूपखाद्यादिभक्षणंकुर्यात् ॥ जन्माशौचमध्येप्रथमषष्ठदशमदिनेषुचना
शौचदोषः ॥ अन्नग्रहणेदोषएव ॥ पुरुषाःशस्त्रहस्ताःस्त्रियोगीतिकारिण्योस्यांरात्रौजागरणंकुर्युः ॥ सूतिका
गृहंचधूपाग्निदीपशस्त्रमुसलविभूतियुतंकार्यं ॥ सर्षपादिविकिरणमन्यदपिशांतिसूक्तपाठादियथाचारंकार्यं ॥
इतिषष्ठीपूजासमाप्ता ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ५६ ॥ ॥ अथ नामकरण प्रारंभः ॥

॥१३४॥

श्रीगणेशायनमः ॥ अत्रमातापुत्रयोःपितुश्चत्रयाणांद्वादश्यामेवाशौचनिवृत्तिः ॥ नत्वेकादश्यां ॥ स्नानागार
शुध्योर्द्वादश्यांविधानात् ॥ तेनशाखांतरेविहितमपिऔपासनहोमोनामकरणश्राद्धादिकंचास्माकमेकाद

इयांनभवति ॥ इदंचनामकरणंजन्मतोद्वादशेदिवसेकर्तव्यं ॥ तच्चस्वकालप्राप्तमपिविष्टिवैधृतिव्यतीपात ग्रहणसंक्रांत्यमावास्यापितृश्राद्धादिनेषुनकार्यं ॥ स्वकालेक्रियमाणस्यगुरुशुक्रास्तबाल्यवार्धकवक्रातिचारम लमासादिनिषेधोनास्ति ॥मातापुत्रयोःपितुश्चस्नानंखननलेपनादिनागारशुद्धिंचकारयित्वासूतिकाग्निंबहिःपरि हृत्यौपासनमग्निमानीयायतनेसंस्थाप्यप्राङ्मुखउपविश्यदक्षिणतःकुमारसहितांभार्यामुपवेश्यदेशकालौसं कीर्त्यास्यशिशोर्बीजगर्भसमुद्भवैनोनिबर्हणायुर्वर्चोभिवृद्धिद्वाराव्यवहारासिद्धिद्वाराचश्रीपरमेश्वरप्रीत्यर्थंनाम करणाख्यंकर्मकरिष्येइतिसंकल्प्य ॥ तदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइ तिसंकल्प्योक्तरीत्याकुर्यात् ॥ नामदानांगत्वेनोद्धननादिकर्मकरिष्येइतिसंकल्प्यगृह्याग्निंपार्थिवनामानमुप समाधायसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा ॥ नामकरणहोमकर्मणियायक्ष्यमाणादेवतास्ताः सर्वाःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वा ॥ वैशेषिकप्रधानहोमे ॥ धातारंचतुरनुमतिंचतूराकांद्विःसिनी वालींद्विःकुहूंचाज्येनअंगहोमेवरुणंद्विरित्यादिस्रावेणेत्यंतमुक्त्वासमिधोग्नावाधायव्याहृत्यंतंहुत्वा ॥ प्र धानहोमे ॥ धाताददातुनोरयिमितिचतस्रोधात्रीर्हुत्वा ॥ अनुनोद्यानुमतिर्यज्ञंदेवेषुमन्यतां ॥ अग्निश्चहव्य वाहनोभवतांदाशुषेमयः स्वाहा ॥ अनुमत्याइदं० ॥ अन्विदनुमतेत्वंमन्यासैशंचनःकृधि ॥ क्रत्वेदक्षाय नोहिनुप्रणआयूंषितारिषःस्वाहा ॥ अनुमत्याइदं० ॥अनुमन्यतामनुमन्यमानाप्रजावंतंरयिमक्षीयमा

हि० ब्र० णं॥तस्यैवय ᳪ हेडंसिमापिंभूमसानोदेवीसुहवाशर्मयछतुस्वाहा॥अनुमत्याइदं० ॥यस्यांमिदंप्रदिशियद्विरोच ना० क०
तेनुमतिंप्रतिंभूषंत्यायवः ॥ यस्यांउपस्थउर्वंतरिक्ष ᳪ सानोदेवीसुहवाशर्मयच्छतुस्वाहा ॥ अनुमत्याइ
॥१३५॥ दं ॥ राकामह ᳪ सुहवा ᳪ सुष्टुतीहुवेशृणोतुनःसुभगाबोधंतुत्मनां॥ सीव्यत्वपःसूच्याछिंद्यमानयाददातुवी
रᳪशतदायमुक्थ्यᳪस्वाहा॥राकायाइ० यास्तेराकेसुमतयःसुपेशसोयाभिर्ददासिदाशुषेवसूनि॥ताभिर्नोअद्यसु
मनाउपागहिसहस्रपोषᳪसुभगेरराणास्वाहा ॥ राकायाइदं० ॥ सिनीवालिपृथुष्टुकेयादेवानामसिस्वसा ॥
जुषस्वहव्यमाहुतंप्रजांदेविदिदिड्ढिनःस्वाहा ॥ सिनीवाल्याइदं० ॥ यासुपाणिःस्वंगुरिःसुषूमाबहुसूवरी ॥
तस्यैविश्पत्न्यैहाविःसिनीवाल्यैजुहोतनस्वाहा॥सिनीवाल्याइदं० ॥ कुहूमहᳪसुभगांविद्मनापसमास्मिन्यज्ञे
सुहवांजोहवीमि ॥ सानोददातुश्रवणंपितृणांतस्यास्तेदेविहविषाविधेमस्वाहा ॥ कुह्वाइदं० ॥ इति
द्वादशत्रयोदशवाहुतीर्हुत्वा॥ततइमंमेवरुणेत्यादित्रिवृदन्नहोमंपुण्याहवाचनांतंशुल्बप्रहरणादिसंस्थाजपांतं
समाप्यनामदानं॥ तत्रप्रथमंकुलदेवतानामहालक्ष्मीभक्तइत्यादि॥ततोजन्मकालीनमासनाम॥तच्च॥कृष्णोनं
तोच्युतश्चक्रीवैकुंठोथजनार्दनः ॥ उपेंद्रोयज्ञपुरुषोवासुदेवस्तथाहरिः॥योगीशःपुंडरीकाक्षोमासनामान्यनुक्र ॥१३५॥
मात्॥तत्रयथाचारंचैत्रादिर्मार्गशीर्षादिर्वाक्रमः॥ततोव्यावहारिकंनाम॥अत्रैवंव्यवस्था॥वक्ष्यमाणप्रकारेणकृत्रिमं

नामद्वयंकार्यं॥एकंगुप्तमपरंव्यवहाराय॥व्यावहारिकान्नाक्षत्रनामद्वितीयमितिद्रष्टव्यं ॥एवंसोमयाजीतृतीयमि त्यपि ॥ गुप्तंतुनामपुण्याहवाचनात्पूर्वंशुभेकालेकार्यं ॥ तच्चमातापितरावेवजानीतोयावज्जीवंगुप्तंवामौं जीबंधनेपुत्रोवाजानीते ॥ सगुरोरभिवादनंतेनकुर्यात् ॥ तच्चनामस्वत्रिपुरुषवाचिऋषिवाचिदेवतावाचि वाथवास्वेष्टं ॥ द्व्यक्षरंप्रतिष्ठाकामः ॥ चतुरक्षरंब्रह्मवर्चसकामः ॥ तच्चघोषवदाद्यंतरंतस्थंदीर्घात्परंविसर्गां तंवासूपसर्गंवानामकार्यं ॥ ततोनाक्षत्रंनामज्योतिःशास्त्रोक्तावकडाचक्रानुसारेणजन्मनक्षत्रपादप्रयुक्ताक्षरा दिनाम ॥ तच्च ॥ चुचेचोलाश्विनी ॥ लिलुलेलोभरणी ॥ अइउएकृत्तिका ॥ ओवाविवुरोहिणी ॥ वेवो काकिमृगशिरः ॥ कुघङछआर्द्रा ॥ केकोहाहिपुनर्वसू ॥ हुहेहोडापुष्य ॥डिडुडेडोआश्लेषा ॥ मामिमुमे मघा॥ मोटाटिटुपूर्वाफल्गुनी ॥टेटोपापिउत्तराफल्गुनी ॥ पुषाणाढाहस्त ॥ पेपोरारिचित्रा रुरेरोतास्वाती तितुतेतोविशाखा ॥ नानितुनेअनूराधा ॥ नोयायियुज्येष्ठा ॥ येयोभाभिमूळ ॥ भुधाफाढापूर्वाषाढा ॥ भेभो जाजिउत्तराषाढा ॥ जुजेजोखाअभिजित् ॥ खिखुखेखोश्रवण ॥ गागिगूगेधनिष्ठा ॥ गोसासिसुशत तारका ॥ सेसोदादिपूर्वाभाद्रपदा॥दूथंझञउत्तराभाद्रपदा ॥ देदोचाचिरेवतीइति ॥ अथवाबौधायनोक्तं जातधिकारविहिताणादिप्रत्ययांतंनाक्षत्रंनाम ॥ तच्च ॥ अश्वयुक् ॥ आश्वयुजः ॥ आश्वयः ॥ अपभ रणः॥आपभरणः॥पहुलः॥रोहिणः॥रौहिणः॥मृगशीर्षःमार्गशीर्षः॥आर्द्रकः॥आर्द्रः॥पुनर्वसुः॥तिष्यः ॥ आश्रे षः ॥ मघः॥माघः॥फल्गुनः॥फाल्गुनः॥ हस्तः ॥ चित्रः ॥ चैत्रः ॥ स्वातिः ॥ विशाखः॥ अनूराधः॥ ज्येष्ठः

ज्यैष्ठः ॥ मूलः ॥ मूलकः ॥ आषाढः ॥ आषाढीयः ॥ अभिजित् ॥ आभिजितः ॥ आभिजः ॥ श्रवणः ॥ श्रावणः ॥श्रविष्ठः॥श्राविष्ठीयः ॥ शतभिषक् ॥ शातभिषः ॥ शातभिषजः ॥ प्रोष्ठपादः ॥ प्रोष्ठपदः ॥ रेवतः॥रैवतः॥इति ॥ एतच्चसर्वंनामशर्मांतंब्राह्मणस्यकार्यं ॥ अत्रायंशिष्टाचारः ॥ तंडुलान्कांस्यादिपात्रेप्रसार्यतदुपरिसुवर्णशलाकयालिखेत् ॥ प्रथमंकुलदेवतानाम॥ततोमासनाम ॥ ततोव्यावहारिकंनाम ॥ ततोनाक्षत्रंचइतिचतुष्टयंलिखित्वानामदेवताभ्योनमइतिगंधादिदक्षिणांतोपचारैःसंपूज्य ॥ ततःकर्त्ताकुलदेवतानाम्नामहालक्ष्मीभक्तोसीतिस्वदक्षिणेविद्यमानस्यमातुरुत्संगस्थस्यशिशोर्दक्षिणेकर्णेकथयित्वानर्यप्रजामित्यादिनाप्रतिष्ठाप्य ॥ विप्रैर्नामसुप्रतिष्ठितमस्त्वित्युक्ते ॥महालक्ष्मीभक्तोयंभवतःसर्वान्ब्राह्मणानभिवादयते ॥ विप्रैरायुष्मान्भवतुमहालक्ष्मीभक्तइत्युक्ते ॥ अस्मैमहालक्ष्मीभक्तायपुण्याहंभवंतोब्रुवंत्विति त्रिः ॥ ओंपुण्याहमितित्रिर्विप्राः ॥ एवंस्वस्तिऋद्धिमितित्रिर्वाचयेत् ॥ एवंशिष्टनामत्रयेपिपुण्याहवाचनांतंकार्यं ॥ ततोनीराजनंकारयित्वाश्रीरस्त्वित्याद्युक्त्वाप्रजापतिःप्रीयतामित्युक्त्वा ॥ कर्मांतेपिपुण्याहवाचनचिकीर्षायां पुण्याहवाचनमभिषेचनंचकारयेत् ॥ ततःकर्मांगत्वेनदशाधिकब्राह्मणभोजनंसंकल्प्य ब्राह्मणान्गंधादिनासंपूज्यभूयसींदक्षिणांदत्त्वाब्राह्मणेभ्यआशिषोग्राह्याः ॥ ततःकर्मसाद्गुण्यायविष्णुंस्मरेत् शिष्टैरिष्टैश्चसहभोजनंकुर्यात् ॥ इतिसत्याषढहि॰तौनामकरणप्रयोगः ॥ अथप्रवासादागतेपुत्रेपितरिवापुत्रद

र्शनेसातिपितुरेवनैमित्तिकंकर्मोच्यते ॥ पितापुत्रमभिमृशति ॥ सोमस्यत्वाद्युम्नेनाभिमृशाम्यग्नेस्तेजसा सूर्यस्यवर्चसेति ॥ ततोमूर्ध्न्याजिघ्रति ॥ पशूनांत्वाहिंकारेणाभिजिघ्राम्यमुकशर्मन्नायुषेवर्चसेह्वमिति ॥ ततःस्वदक्षिणेनहस्तेनपुत्रस्यदक्षिणंहस्तमुत्तानंसांगुष्ठंगृण्हाति ॥ अग्निरायुष्मानितिपंचाभिःपर्यायैः ॥ अग्निसोमयज्ञब्रह्मदेवाइतिमंत्रक्रमः ॥ ततआयुष्टेविश्वतोदधादितिअग्नौपृथिव्यांप्रतितिष्ठेतिमंत्रद्वयं पुत्रस्यदक्षिणकर्णेजपति ॥ ततआयुर्दाअग्नेइतिअग्नौपृथिव्यांप्रतितिष्ठेतिचोत्तरेकर्णेजपति ॥ इदंयावज्जीवं यावदुपनयनंवापितुर्नैमित्तिकं ॥ अथस्वगृह्यानुक्ताअपिकेचनसंस्काराःशिष्टपरिगृहीतत्वेनावश्यकत्वात्स्मार्तालिख्यंते ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥छ॥ ॥ छ ॥

## ॥ ८७ ॥ अथायुर्वर्धापनप्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ जन्मनक्षत्रेप्राक्संवत्सरात्प्रतिमासंनक्षत्रहोमः ॥ ऊर्ध्वंसंवत्सरेसंवत्सरे ॥ बाल्ये पित्रादिःकुर्यात् ॥ ऊर्ध्वंस्वयमेववाकुर्यात्सौरमानेन ॥ यजमानःकृतावश्यकक्रियःसर्वौषधियुतजलपूरितकलशंसंपूज्यतदुदकेनस्नात्वाशुक्लांबरधरोलंकृतःकौतुकमाबध्यप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यममाब्दपूर्तिजन्मदिवसेआयुरभिवृद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थआयुर्वर्धापनाख्यंकर्मकरिष्येइतिसंकल्प्य ॥ गणपतिं संपूज्यपुण्याहंवाचयित्वा ॥ आयुर्वर्धापनांगत्वेनोद्धननादिकर्मकरिष्येइतिसंकल्प्योद्धननादि भूसंस्काराँवि

धायबलवर्धननामानमौपासनमग्निंलौकिकमग्निंवाप्रतिष्ठाप्यसमिन्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृ
त्वा ॥ आयुर्वर्धापनहोमकर्माणियायक्ष्यमाणादेवतास्ताःसर्वाःपरिग्रहीष्यामीत्यादिसामान्यप्रधानांतमुक्त्वावै
शेषिकप्रधानहोमे ॥ अमुकजन्मनक्षत्रंतद्देवतांवाअष्टोत्तरशतसंख्ययाष्टाविंशतिसंख्ययावाचरुणायक्ष्ये ॥
अंगहोमेवरुणंद्विरित्यादिन्याद्यत्यंतंहुत्वाजन्मनक्षत्रंतद्देवतांवाचरुणातत्तन्नाममंत्रेणहुत्वाहोमशेषंसमाप्यना
त्रिवृदन्नहोमः ॥ स्वजननक्षत्रंतद्देवतांचंद्रंवरुणंचयथोपचारैःसंपूज्यकृताभिषेकोयथाशक्तिस्वजनबंधुसु
हृत्पूजांस्ववाहनादिपूजांचकृत्वाब्राह्मणान्भोजयित्वागंधवस्त्रादिभिरलंकृतः ॥ पतिपुत्रवतीभिर्नीराजितो
ब्राह्मणाशिषोगृहीत्वाहविष्याशीजितेंद्रियःस्यात् ॥ उपहोमेपुनास्तित्रिवृदन्नहोमःआचाराभावात् ॥ यदि
सिद्धश्चरुर्गृह्यतेतदादेवपवित्राख्यसंस्कारसंस्कृतोग्राह्यः ॥ आपूर्विकपक्षेणवाचरुहोमःकार्यः ॥ इत्यायुर्व
र्धापनप्रयोगः ॥ अथशिशोःपर्यंकारोपणं ॥ जन्मदिनात्द्वादशेषोडशेद्वाविंशेअन्यस्मिन्वाज्योतिःशास्त्रोक्तमृ
दुक्षिप्रनक्षत्रादियुतेशुभेकालेयथाचारंकुलदेवतापूजाविधायालंकृतंशिशुंहरिद्राद्यलंकृतेपर्यंकेमात्राद्याःसौभा
ग्ययुताःस्त्रियोजलशायिनंहरिंसंस्मृत्यगीतवाद्यादिसमकालंप्राक्शिरसंस्थापयेयुः ॥ यथाचारंकुलदेवताश्चपू
जयेत् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ ५८ ॥ अथदुग्धपान प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ एकत्रिंशद्दिनेद्वितीयजन्मनक्षत्रदिनेवायथाचारमन्यस्मिन्प्राशननक्षत्रयुतेशुभेकालेवाकुलदेवतापूजांविधायगोक्षीरंशंखेनमातान्यावासुभगाकुमारंदाक्षिणशिरसंप्राक्शिरसवापाययेदिति ॥

## ॥ ५९ ॥ अथकर्णवेधः प्रारंभः ॥

श्रीगणेशायनमः॥ जन्मदिनात्द्वादशेषोडशेवादिनेषष्ठसप्तमाष्टममासान्यतममासेदंतजननात्पूर्वमेवजोतिर्विदादिष्टेशुभेकालेपूर्वाण्हेमध्यान्हेवाविष्णुशिवब्रह्मचंद्रसूर्यदिगीशनासत्यसरस्वतीकुलदेवतागोब्राह्मणान्यथाविभवंसंपूज्यमातुरुत्संगस्थस्यशुभासनस्थस्यवालंकृतस्यशिशोःप्राङ्मुखस्योदङ्मुखस्यवाकुशलेनसुवर्णादिसूच्याकर्णौमेधयेदनावृतेसूर्यरश्मिपातस्थलेंगणादौकुमारस्यपूर्वंदाक्षिणःकुमार्यावामः ॥ वेधनर्क्षात्तृतीयनक्षत्रेकर्णक्षालनंकार्यं ॥ आभरणधारणक्षमताभवतितथावर्धनीयौ ॥ पुंसःसूर्यरश्मिप्रवेशयोग्यरंध्रपर्यंतंवर्धयेत् लंबकर्णतातुनिषिद्धा ॥ स्त्रीणांतुयथेष्टं ॥ अथसूर्यावलोकनंनिष्क्रमणंच ॥ तृतीयेमासिजन्मादिनेजन्मभेवाइष्टदेवतापूजनपूर्वकंशिशुनासोत्सवंसूर्यदर्शनंकारयित्वा॥ चतुर्थेमासिशुभेकालेवाचंद्रंधेनुंचदर्शयेत् ॥अथवासूर्यावलोकनंनिष्क्रमणेनसहैवकार्यं॥ चतुर्थेषष्ठेवामासिशुक्लपक्षेशुभतिथ्यादौपितासभार्यःसशिशुश्चअभ्यंग

हि॰ब्र॰ स्नातःकृतकौतुकश्चप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यममास्यशिशोरायुरभिवृद्धिद्वाराबीजगर्भसमुद्भवैनो क॰वे॰
निबर्हणद्वाराचश्रीपरमेश्वरप्रीत्यर्थंसूर्याद्यवलोकनंनिष्क्रमणंचकरिष्ये ॥ तदंगंगणपतिपूजनादिकरिष्येइति
॥१३८॥ संकल्प्यकृत्वा ॥ ततइंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानानांदिक्पालानांदिशांचंद्रार्कवाय्वादिदेवानां
चयथाक्रमंपूजांकृत्वाब्राह्मणान्संभोज्येशिशुमलंकृत्याग्निसूर्यचंद्रधेनूनांदर्शनंकारयित्वामंत्रान्पठेत् ॥ चं
द्रसूर्यादिगीशानांदिशांचवरुणस्यच ॥ निक्षेपार्थमिमंदद्मितेत्वांरक्षंतुसर्वदा॥ अप्रमत्तंप्रमत्तंवादिवारात्र
मथापिवा ॥ रक्षंतुसततंसर्वेदेवाःशक्रपुरोगमाः ॥ एवंशिशुरक्षार्थंदेवान्संप्रार्थ्यविष्णुशिवालय ॥
योरन्यतरद्बंधुगृहंवागत्वातत्रतत्रदेवंपुष्पोपहारादिभिःसंपूज्यगोमयाद्युपलिप्तेचतुरस्रेदेशेधान्यादिनिधायतत्र
शिशुमासयित्वामंत्रेणरक्षांकुर्यात् ॥ ओंह्रौंजूंसः ॥ ॐत्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उर्वारुकमिवबंध
नान्मृत्योर्मुक्षीयमामृतात् ॥ सःजूंह्रौंॐ ॥ इत्येवंरूपंमृतसंजीवनमंत्रंपठन्विभूत्याक्षतैर्वामूर्ध्निललाटेचर
क्षांकृत्वा ॥ अपूपादिभिर्भूतेशानंगणेशंचसमभ्यर्च्यशिशुंभक्ष्यादिनातोषयित्वादेवताप्रणामंप्रदक्षिणात्रयंच
शिशुनाकारयित्वामातुलाद्यासन्नबंधुगृहंपूर्ववन्नीत्वातत्रशिशुंतोषयित्वास्वगृहंगत्वाब्राह्मणेभ्योदक्षिणांदत्त्वा
शिषोवाचयेत् ॥ इतिनिष्क्रमणं ॥ अथोपवेशनं ॥ पंचमेमासेशुक्लपक्षेपूर्वाण्हेज्योतिर्विदुक्तेमुहूर्तेगणेशंपूज ॥१३८॥
यित्वापुण्याहंवाचयित्वावराहपृथिवीगुरुदेवद्विजान्पूजयित्वाभूमिमुपलिप्यतत्ररंगवल्यामंडलंकृत्वाशंखतूर्या

दिसंस्त्रावेणेत्यंतमुक्त्वान्वाधानसमिधोग्नावाधायसामान्यप्रधानांतंहुत्वा ॥ वैशेषिकहोमे ॥ सदसस्प
तिमद्भुतंप्रियमिंद्रस्यकाम्यं ॥ सनिंमेधामयासिषꣳ स्वाहा ॥ सदसस्पतयइदं० ॥ प्रजापतयेकां
डर्षयेस्वाहा ॥ प्रजापतयेकांडर्षयइदं० ॥ सोमायकांडर्षयेस्वाहा ॥ सोमायकांडर्षयइदं० ॥
अग्नयेकांडर्षयेस्वाहा ॥ अग्नयेकांडर्षयइदं० ॥ विश्वेभ्योदेवेभ्यःकांडर्षिभ्यःस्वाहा ॥ वि
श्वेभ्योदेवेभ्यःकांडर्षिभ्यइदं० ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुम
स्तन्नोअस्तुवयꣳस्यामपतयोरयीणाꣳस्वाहा ॥ प्रजापतयइदं०॥रयीणांपतिंयजतंबृहंतमस्मिन्भरेनृतमंवाज
सातौ ॥ प्रजापतिंप्रथमजामृतस्ययजामदेवमधिनोब्रवीतुस्वाहा ॥ प्रजापतयइदं० ॥ प्रजापतेत्वंनिधि
पाःपुराणोदेवानांपिताजनिताप्रजानां ॥ पतिर्विश्वस्यजगतःपरस्पाहविर्नोदेवविहवेजुषस्वस्वाहा ॥ प्रजा
पतयइदं० ॥ तवेमेलोकाःप्रदिशोदिशश्चपरावतोनिवतउद्वतश्च ॥ प्रजापतेविश्वसृज्जीवधन्यइदंनोदेवप्र
तिहर्यहव्यꣳ स्वाहा ॥ प्रजापतयइदं० ॥ प्रजापतिंप्रथमंयज्ञियानांदेवानामग्रेयजतंयजध्वं ॥ सनोददातु
द्रविणꣳ सुवीर्यꣳ रायस्पोषंविष्यतुनाभिमस्मेस्वाहा ॥ प्रजापतयइदं० ॥ योरायईशेशतदायउक्थ्योयःप
शूनाꣳ रक्षिताविष्ठितानां ॥ प्रजापतिःप्रथमजाऋतस्यसहस्रधामाजुषताꣳ हविर्नःस्वाहा॥प्रजापतयइदं०

॥ ६ ॥ सोमो धेनु सोमो अर्वन्तमाशु सोमो वीरं कर्मण्यं ददातु ॥ सादन्यं विदथ्य सभेयं पितृश्रवणं योद वे॰ व्र॰
दाशदस्मै स्वाहा ॥ सोमायेदं॰ ॥ अषाढं युत्सु पृतनासु पप्रिं सुवर्षामप्सां वृजनस्य गोपां ॥ भरेषुजा
सुक्षिति सुश्रवसं जयन्तं त्वामनुमदेम सोम स्वाहा ॥ सोमायेदं॰ ॥ त्व सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सु
दक्षो विश्ववेदाः ॥ त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः स्वाहा ॥ सोमायेदं॰ ॥ या ते धामा
नि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञं ॥ गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान्त्स्वाहा ॥ सो
मायेदं॰ ॥ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ॥ त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो
ववर्थ स्वाहा ॥ सोमायेदं॰ ॥ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नो विश्वैः सुमना अ
हेडन्राजन्त्सोम प्रति हव्या गृभाय स्वाहा ॥ सोमायेदं॰ ॥ ६ ॥ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयु
नानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम स्वाहा ॥ अग्नय इदं॰ ॥ प्र वः शुक्राय भा
नवे भरध्व हव्यं मतिं चाग्नये सुपूतं ॥ यो दैव्यानि मानुषा जनू ष्यन्तर्विश्वानि विद्मना जिगाति स्वाहा ॥ अग्नय ॥१५२॥
इ॰ ॥ अच्छा गिरो मतयो देवयन्तीरग्निं यन्ति द्रविणं भिक्षमाणाः ॥ सुसंदृशं सुप्रतीकं स्वंच हव्यवाहम

रतिमानुषाणा ॅ स्वाहा ॥ अग्नयइ ० ॥ अग्नेत्वमस्मद्युयोध्यमीवाअनग्निन्त्राअभ्यमंतकृष्टीः ॥ पुनरस्मभ्यं
ॅ सुवितायदेवक्षांविश्वेभिरजरेभिर्यजत्रस्वाहा ॥ अग्नयइ ० ॥ अग्नेत्वंपारयानव्योअस्मान्त्स्वस्तिभिरतिदुर्गाणि
विश्वा ॥ पूश्चपृथ्वीबहुलानंउर्वीभवातोकायतनयायशंयोःस्वाहा ॥ अग्नयइ ० ॥ प्रकारवोमननावच्यमा
नादेवद्रीचींनयथदेवयंतः ॥ दक्षिणावाड्वाजिनीप्राच्येतिहविर्भरंत्यग्नयेघृताचीस्वाहा ॥ अग्नयइ ० ॥ ६ ॥
आनोविश्वेअस्क्रागमंतुदेवामित्रोअर्यमावरुणःसजोषाः ॥ भुवन्यथानोविश्वेवृधासःकरन्त्सुषाहाविथुरन्नश
वःस्वाहा ॥ विश्वेभ्योदेवेभ्यइ ० ॥ शन्नोदेवाविश्वदेवाभवंतुश ॅ सरस्वतीसहधीभिरस्तु ॥ शमभिषाचः
शमुरातिषाचःशन्नोदिव्याःपार्थिवाःशन्नोअप्याःस्वाहा ॥ विश्वेभ्योदेवेभ्यइ ० ॥ येसवितुःसत्यसवस्यवि
श्वेमित्रस्यव्रतेवरुणस्यदेवाः ॥ तेसौभगंवीरवद्गोमदप्नोदधातनद्रविणंचित्रमस्मेस्वाहा ॥ विश्वेभ्योदेवेभ्य
इदं ० ॥ अग्नेयाहिदूत्यंवारिषेण्योदेवा ॅ अच्छाब्रह्मकृतागणेन ॥ सरस्वतींमरुतोअश्विनापोयक्षिदेवान्रं
त्नधेयायविश्वान्त्स्वाहा ॥ विश्वेभ्योदेवेभ्यइ ० ॥ द्यौःपितःपृथिविमातरध्रुगग्नेभ्रातर्वसवोमृडतानः ॥ विश्वे
आदित्याअदितेसजोषाअस्मभ्य ॅ शर्मबहुलंवियंतःस्वाहा ॥ विश्वेभ्योदेवेभ्यइ ० ॥ विश्वेदेवाःशृणुतेम

हव्वंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिव्हाउतवायजंत्राआसद्यास्मिन्बर्हिषिमादयध्व स्वाहा ॥ वि
श्वेभ्योदेवेभ्यइ० ॥ ६ ॥ इतिप्रजापतिसोमाग्निविश्वदेवेभ्यःप्रत्येकंषट्षडाहुतीर्हुत्वाततइमंमेवरुणेत्या
दिदेवसवितःप्रासावीरितिपरिषेकविसर्गांतमाचार्यःसमापयेत् ॥ ततोब्रह्मचारीउपस्थेयदेवताअभिसंधायो
पतिष्ठते ॥ अग्नेव्रतपतेव्रतंचरिष्यामितच्छकेयंतन्मेराध्यतां ॥ वायोव्रत० ॥ आदित्यव्रत० ॥ व्रतानांव्र
तपते० ॥ तां० ॥ एवंउक्तरीत्यादेवताउपस्थायगुरवेवरंदद्यात् ॥ उक्तोवरः ॥ ततआचार्यःयथेतंप्रणीताः
पर्यात्द्दत्यसंस्थाजपांतंकर्मसमापयेत् ॥ नात्रस्विष्टदन्नहोमः ॥ ब्राह्मणभोजनंसंकल्प्यगंधादिनासंपूज्यभूय
सींदक्षिणांदत्वाग्निंविसृज्यप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ब्रह्मचारीस्वविहितानिव्रतान्या
चरन्यथासारस्वतपाठेनाध्ययनंकुर्यात् ॥ इतिहिरण्य० स्मा० सं० वैशं० म० वेदव्रतोपाकरणप्रयोगःसमाप्तः

॥ ७२ ॥ ॥ अथ वेदव्रतोत्सर्जनप्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ आचार्यश्चंद्रानुकूल्येसतिनद्यादौप्रशस्तेदेशेकृतनित्यक्रियःप्राङ्मुखउपविश्यस्व
दक्षिणतोब्रह्मचारिणमुपवेश्यदेशकालौसंकीर्त्यास्यब्रह्मचारिणोवेदाध्ययनांगत्वेनस्वीकृतानांप्राजापत्यसौ
म्याग्नेयवैश्वदेवकांडाख्यव्रतानामुत्सर्जनानितंत्रेणकरिष्येतदंगंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनं
नांदीश्राद्धंचकरिष्येइतिसंकल्प्योक्तरीत्याकुर्यात् ॥ ततोब्रह्मचारिणोवपनंस्नानंनूतनकाटिसूत्रकच्छेपवीताजि
नोत्तरीयदंडानांधारणंचकारयित्वापुराणानिकाटिसूत्रादीन्यप्सुनिक्षिप्योद्धननादिनाभूसंस्कारंविधायतत्रसमुद्भ

वनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमिद्द्वयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वावेदव्रतोत्सर्जनहो
मकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वावैशेषिकहोमेसदसस्पतिंप्रजापतिंकांडर्षिं
सोमंकांडर्षिंअग्निंकांडर्षिंविश्वान्देवान्कांडर्षीश्चाज्येनप्रजापतिंसोममग्निंविश्वान्देवांश्चप्रत्येकंषड्भिरा
ज्याहुतिभिर्यक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिसंस्रावेणेत्यंत मुक्त्वासमिधोग्नावाधायपरिसमूहनादिव्याहृत्यं
तंहुत्वावैशेषिकहोमादिपरिषेकविसर्गांतमुपाकरणवत्कुर्यात् ॥ ततोब्रह्मचारीउपस्थेयदेवताअग्न्याद्याश्चतस्र
अभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतमचा॰ धि॥वायोव्र॰आदित्य॰व्रतानां॰धि ॥इतिव्रतविसर्गंकृत्वागुर
वेवरंदद्यात्।आचार्यःप्रणीताःपर्याहृत्यसंस्थाजपांतंसमाप्यनात्रस्विष्टकृन्होमः।ब्राह्मणभोजनंसंकल्प्यतत्पूजनं
भूयसींदक्षिणादानमाशीःप्रार्थनंचकृत्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत्॥शुक्रियव्रतंसूत्रवृत्ति
कृद्भ्यामस्पृष्टमपिबौधायनेदृष्टत्वेनकारिकाकृतोक्तत्वाच्छक्तौकर्तव्यमपूर्विकपक्षेण ॥ तस्यप्रयोगः॥आचा
र्यश्चंद्रानुकूल्येसतिशुभदिनेप्राङ्मुखउपविश्यब्रह्मचारिणंप्रातराह्निकःयोत्तरंचोपवेश्यदेशकालौसंकीर्त्यास्य
ब्रह्मचारिणोवेदाध्ययनाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसौम्यव्रतांतर्गतशुक्रियव्रतोपाकरणंकरिष्येतदं
गंगणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यकृत्वाब्रह्मचारिणोवपनं ॥ कटि
सूत्रादिपूर्ववद्दत्वासायंहोमानंतरमस्तमितेआदित्येग्रामात्प्रागुदग्वाजलसमीपेगत्वाप्राङ्मुखोब्रह्मचारिसहि
तउपविश्यदेशकालौसंकीर्त्यशुक्रियव्रतांगमुद्धतनादिकर्मकरिष्येइतिसंकल्प्यगणेशंसंपूज्योद्धननादिनाभूसं

स्कारंविधायसमुद्भवनामानंलौकिकमग्निंप्रतिष्ठाप्यप्रज्वाल्यसमिन्नयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा शुक्रियव्रतोपाकरणहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ तूष्णीमग्निंसमिद्भिःअग्निंवायुमादित्यंप्रजापतिंचौदुंबरसमिद्भिर्यक्ष्ये ॥ प्रायश्चित्तहोमेव्याहृतिदेवताश्चाज्येनयक्ष्ये॥इत्युक्त्वासमिधोग्नावाधाय ॥ प्रोक्षणींदर्वींआज्यस्थालींऔदुंबरीश्चतस्त्रःसमिधःवासःकुशाद्यासाद्यप्रोक्षणीसंस्कारादिपरिषेकांतंकृत्वा ॥ समिद्धोमः ॥ पृथिवीसमित् ॥ तामग्निःसमिंधे ॥ साग्निꣳ समिंधे ॥ तामहꣳ समिंधे ॥ सामासमिद्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्रह्मवर्चसेन ॥ अन्नाद्येनसमिताꣳ स्वाहा ॥ अग्नयइदं॰ ॥अंतरिक्षꣳ समित् ॥ आयुषातेजसा ॥ सावायुꣳ समिंधे ॥ तामहꣳ समिंधे ॥ सामासमिद्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्रह्मवर्चसेन ॥ अन्नाद्येनसमिंताꣳ स्वाहा ॥ वायवइदं॰ ॥ द्यौःसमित् ॥ तामादित्यः समिंधे ॥ सादित्यꣳ समिंधे॥तामहꣳ समिंधे ॥ सामासमिद्धा ॥ आयुषातेजसा ॥ वर्चसाश्रिया ॥ यशसाब्रह्मवर्चसेन ॥ अन्नाद्येनसमिंताꣳ स्वाहा ॥ आदित्यायेदं॰॥ प्राजापत्यामेसमिदसिसपत्नक्षयणी ॥ भ्रातृव्यहामेसिस्वाहा ॥ प्रजापतयइ॰ ॥ ततोन्यूनातिरिक्तदोषपरिहारार्थंव्याहृतिहोमंकृत्वा ॥ ततोब्रह्मचारी वेदाध्ययनांगंअग्न्यादिसन्निधौशुक्रियव्रतग्रहणंकरिष्येइतिसंकल्प्यचतस्रोदेवताअभिसंधायोपतिष्ठते॥ अग्ने व्रतपतेव्रतंचरिष्यामीत्यादिनाव्रतंस्वीकृत्यसौम्यानुवाकानामादितःकिंचित्किंचिदधीत्यवाससाशिरःसमुखं वेष्टयित्वाग्रामं प्रविश्यतांरात्रिंवाग्यतस्तिष्ठेत्॥उदितआदित्येशिरोमुखवेष्टनेविमुच्यकृतनित्यक्रियोग्निकार्यंकु

त्वा॥वयं:सुपर्णा उपसेदुरिंद्रं प्रियमेधा ऋषयोनाधमानाः॥अपध्वांतमूर्णुहि पूर्द्धि चक्षुर्मुमुग्ध्यस्मान्निधयेवबद्धान्॥ तच्चक्षुर्देवहितंपुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदः शतंजीवेम॰ सूर्यदृशे ॥ इत्यादित्यमुपस्थाय ॥ ततआदित्यमग्निमइमानंकुंभंवत्संहिरण्यं वद्दत्वाचार्ययवरंदत्त्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिशुक्रियव्रतोपाकरणप्रयोगः ॥ सौम्यकांडांतर्गतशुक्रियदृष्टंवेदभागमधीत्योत्सर्जनंकुर्यात् ॥ ॥छ॥ ॥ छ ॥

॥ ७३ ॥ ॥ अथोत्सर्जनप्रयोग प्रारंभः ॥

आचार्योब्रह्मचारिसहितःप्राङ्मुखउपविश्याचम्यअस्यब्रह्मचारिणोवेदाध्ययनांगत्वेनस्वीकृतस्यशुक्रियव्रतस्योत्सर्जनंकरिष्येइतिसंकल्प्यगणेशपूजनादिकृत्वापरिषेकांतंपूर्ववदापूर्विकपक्षेणकृत्वासमिद्धोमेविशेषः द्यौःसमिदितिविलोमपाठेनऔदुंबरीश्चतस्रःसामिधोहुत्वाऽऽदित्यव्रतपतेव्रतमचारिषमित्यादिव्युत्क्रमपाठेनोपस्थानादिविष्णुस्मरणांतंसमानं ॥ पृथक्कांडव्रतोपाकरणपक्षेसौम्योपाकरणानंतरंशुक्रियव्रतोपाकरणोत्सर्जनेकृत्वासौम्योत्सर्जनंकुर्यात् ॥ इतिश्रीसत्याषाढ॰ सं॰ वैशं॰ महेशभट्टकृतौवेदव्रतप्रयोगः ॥ ॥ छ ॥

॥ ७४ ॥ ॥ अथ गोदानप्रयोग प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ गविपृथिव्यांदीयंतेस्वापार्थयानिमस्तकस्यचत्वारिगानितेषांवपनादिरूपंकर्मगोदानकर्मेत्युच्यते ॥ तच्चद्विविधं॥एकमुपनयनस्यादौचूडाकरणरूपंद्वितीयमुपनयनानंतरंक्रियमाणं॥तच्चगोदानंउ

पनयनवदावश्यकं ॥ तच्चगर्भतोजन्मतोवाषोडशवर्षेसमावर्तनात्प्राक्कार्यं ॥ ब्रह्मचर्यादिव्रतेनाधीत्यसमाव
र्तितव्यं ॥ ब्रह्मचर्यकालोष्टाचत्वारिंशद्वर्षाणिचतुर्विंशतिर्द्वादशवर्षाणियावद्ग्रहणंवा ॥अशक्तत्वादनि
त्यत्वाच्चयथाशक्त्यधीत्यवास्नानंकरोति ॥ तदागोदानकर्मोक्तष्यसमावर्तनात्प्रागेवोदगयनेशुक्लपक्षेगुरुशुक्र
वार्धकाद्यभावेअक्षयेऽनधिकेचमासिज्योतिर्विदुक्तकालेदिवसेचौलवत्कार्यं ॥ कर्ताप्राङ्मुखउपविश्यस्वद
क्षिणतःपत्नींतद्दक्षिणतोब्रह्मचारिणंचोपवेश्यदेशकालौसंकीर्त्यास्यब्रह्मचारिणआयुर्वर्चोभिवृद्धिद्वाराश्रीपर
मेश्वरप्रीत्यर्थंगोदानकर्मकरिष्ये ॥ तदंगंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धमंकुरारोप
णंचकरिष्यइतिसंकल्प्यकृत्वा ॥ उद्धननादिभूसंस्कारांविधायतत्रसूर्यनामानंलौकिकमग्निंप्रतिष्ठाप्यप्र
ज्वाल्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वागोदानहोमकर्मणियक्ष्यमाणादेवताइत्यादिसामा
न्यप्रधानांतंकृत्वानात्रप्रधानहोमः ॥ अंगहोमादिसंस्थाजपांतंकर्मसमाप्य ॥ अग्नेःपश्चात्कर्तादक्षि
णतोब्रह्मचारीउत्तरतःकेशसंयमनार्थंमाताब्रह्मचारीवाकश्चिदानडुहंगोमयंधारयन्नुपविशति ॥ ततश्चौलोक्तप्र
कारेणोष्णशीताभिरद्भिरुंदनादिवपनांतंआचार्यःनापितोवाचौलवत्कुर्यात् ॥चूडाकरणकालेयथाचारंधृताभिः
सहमध्यशिखासहितंतद्रहितंवावपनमितिविशेषः ॥ गर्तेकेशसंयमनादिकंचौलवत्कृत्वाचार्यायवरंदक्षिणांस
र्पिष्मंतमोदनंनापितायचदत्त्वाकर्मांगदशाधिकब्राह्मणभोजनंभूयसींदक्षिणांदत्त्वाप्रमादात्कुर्वतांकर्मेतिकर्म ॥१५५॥
साद्गुण्यायविष्णुंस्मरेत् ॥ इतिश्रीसत्या॰ प्रथमेसं॰ वै॰ महेशभट्टकृतौगोदानप्रयोगः ॥७४ ॥ अथब्रह्मचारिणो

वेदव्रतातिरिक्तसाधारणव्रतलोपेप्रायश्चित्तं। कृतनित्यक्रियआचार्यः प्रातरग्निकार्योत्तरंब्रह्म चारीचप्राङ्मुखउप
विश्यदेशकालौसंकीर्त्यास्यब्रह्माचारिणः शौचाचमनसंध्यावंदनदर्भधारणभिक्षाग्निकार्यराहित्यशूद्रादिस्पर्शन
कौपीनकटिसूत्रयज्ञोपवीतमेखलादंडाजिनत्यागदिवास्वापछत्रधारणपादुकाध्यारोहणमालाधारणोद्वर्तनानु
लेपनांजनाभ्यंजनजलक्रीडाद्यूतनृत्यगीतवाद्याद्यभिरतिपाखंडादिसंभाषणपर्युषितभोजनादिब्रह्मचारिव्रत
लोपजदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमितममुकप्रत्याम्नायेनप्रायश्चित्तंकरिष्येइतिसं
कल्प्योद्धननादिभूसंस्कारंविधायतत्रलौकिकमग्निंविष्णुनामानंप्रतिष्ठाप्यप्रज्वाल्यसमित्त्रयमादायश्रद्धएहीत्या
दिप्राणायामांतंकृत्वाप्रायश्चित्तहोमकर्मणियक्ष्यमाणादेवताः परिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वाप्रधानहो
मेअग्निंवायुंसूर्यंप्रजापतिंचैकैकयाहुत्याआज्येनयक्ष्ये ॥ अग्निंपृथिवींमहांतं। वायुमंतरिक्षंमहांतं ॥ आदि
त्यंदिवंमहांतं ॥ प्रजापतिंचंद्रमसंनक्षत्राणिदिशोमहांतं ॥ प्रत्येकमेकैकयाहुत्याआज्येन ॥ अग्निंविश्ववे
दसंविभावसुंशतक्रतुंचैकैकयाहुत्याआज्येन ॥ अग्नींद्राभ्यामाज्याहुतिभ्यां ॥ अग्निंवायुंसूर्यंप्रजापतिंचैकै
कयाज्याहुत्यायक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वावैशेषिकहोमः ॥ व्यस्तस
मस्तक्रमेणव्याहृतिचतुष्टयंहुत्वा ॥ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॥ अग्नयेपृथिव्यैमहतइदं० ॥ भुवोवायवेचांतरिक्षायचमहतेचस्वाहा ॥ वायवेंतरिक्षायमहतइदं० ॥ सुवरादित्यायचदिवेचमहतेच
स्वाहा ॥ आदित्यायदिवेमहतइदं० ॥ भूर्भुवःसुवश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा ॥ प्र

जापतये चंद्रमसेनक्षत्रेभ्योदिग्भ्योमहतइदं॰ ॥ पाहिनोअग्नएनसेस्वाहा ॥ अग्नयइदं॰ ॥ पाहिनोविश्व वेदंसेस्वाहा ॥ विश्ववेदसइदं॰ ॥ यज्ञंपाहिविभावसोस्वाहा ॥ विभावसवइदं॰ ॥ सर्वंपाहिशतक्रं तोस्वाहा ॥ शतक्रतवइदं॰ ॥ पुनरूर्जानिवर्तस्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा ॥ अ ग्नयइदं॰ ॥ सहरय्यानिवर्तस्वाग्नेपिन्वस्वधारया॥विश्वप्स्नियाविश्वतस्परिस्वाहा ॥ अग्नयइदं॰ ॥ भूः स्वाहा ॥ अग्नयइदं॰ ॥ भुवःस्वाहा ॥ वायवइदं॰॥ सुवःस्वाहा ॥ सूर्यायेदं॰ ॥ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं॰ ॥ इत्यष्टादशाहुतीर्हुत्वा ॥ ततःकृच्छ्रत्रयप्रत्याम्नायत्वेनकल्पितजपहोमाद्यन्यतमप्राय श्चित्तंकृत्वा ॥ इमंमेवरुणेत्यादिसंस्थाजपांतंसर्वंसमाप्याचार्यायवरंदक्षिणांदत्त्वाप्रमादात्कुर्वतांकर्मेति कर्मसाद्गुण्यायविष्णुंस्मरेत्॥इतिबौधायनोक्तब्रह्मचारिव्रतलोपप्रायश्चित्तं ॥७५॥अथवेदव्रतानांकालातिक्रम प्रायश्चित्तं ॥ कृतनित्यक्रियःआचार्योब्रह्मचारीचप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यास्यब्रह्मचारिणोवेदव्र तानांकालातिक्रमजन्यदोषपरिहारद्वाराश्रीपरमेश्वरप्रीत्यर्थंहोमपूर्वकंकृच्छ्रत्रयमितंअमुकप्रत्याम्नायेनप्रायश्चि त्तंकरिष्ये ॥ तदंगमुद्धननादिकरिष्येइतिसंकल्प्यकृत्वाभूसंस्कारंविधायतत्रलौकिकमग्निंविण्णामानंप्रतिष्ठा प्यसमिद्वयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वा ॥ वेदव्रतकालातिक्रमप्रायश्चित्तहोमकर्मणियक्ष्यमा णादेवताइत्यादिसामान्यप्रधानांतमुक्त्वाप्रधानहोमे ॥ गायत्र्यासहस्रमष्टोत्तरंशतमष्टोत्तरंअष्टाविंशतिसं ख्ययावासवितारमाज्येनयक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वावैशेषिकप्रधानहोमः ॥ य

थोद्दिष्टसंख्ययागायत्र्याहुत्वा ॥ सवित्रइ॰ ॥ ततोजपहोमगोदानाद्यन्यतमप्रत्याम्नायेनप्रायश्चित्तंकृत्वा ॥
ततइमंमेवरुणेत्यादिसंस्थाजपांतंसमाप्याचार्यायदक्षिणांदत्त्वाब्राह्मणभोजनादिसंकल्प्यकर्मसाद्गुण्यायवि
ष्णुंस्मरेत् ॥इतिकालातिक्रमप्रायश्चित्तंकृत्वाशुभदिनेवेदव्रतोपाकरणंयथाकालमुत्सर्जनंचकृत्वैवसमावर्तनं
कार्यं॥उपनयनवदुपनयनोत्तरसंस्काराणामप्यावश्यकत्वात्॥इतिबौधायनोक्तंवेदव्रतकालातिक्रमप्रायश्चित्तं
॥ ७५ ॥ अथसमावर्तनप्रयोगः ॥ उद्धननादिमधुपर्कसमाप्त्यंतंसमावर्तनं ॥ पूर्वोक्तव्रताचरणपूर्वकंय
थाशक्तिवेदमधीत्यगोदानकर्मकृत्वागुरुंदक्षिणादिनासंतोष्यतमनुज्ञाप्योदगयनेसितेपक्षेरोहिणिमृगतिष्यो
त्तराफल्गुनीहस्तचित्राविशाखाद्यन्यतमेनक्षत्रेचंद्रानुकूल्येशुभेदिनेउपनयनोक्तेकालेसमावर्तनंकार्यं ॥ स
मावर्तनप्राक्तनान्याचार्यकर्तृकाणिकर्माणियावदुक्तंब्रह्मचारीकरोति ॥ समावर्तनंतुब्रह्मचारिकर्तृकं ॥ अधी
त्यवेद ्ँ स्नानमितिसूत्रेअधीत्येत्यत्रसमानकर्तृकक्रियाविहितक्त्वाप्रत्ययेनाध्ययनस्नानयोरेककर्तृकत्वस्योक्त
त्वात्समावर्तनापरपर्यायंस्नानंब्रह्मचारिकर्तृकमेव ॥ ब्रह्मचारीकृतानित्यक्रियःप्रातरग्निकार्यानंतरंआचार्यस
हितअपांसमीपेशुचौदेशेगत्वाथवागोष्ठंसूर्यरश्मिदर्शनरहितंसम्यगाच्छाद्यरात्रावेवब्रह्मचारीतत्रगत्वाप्राङ्मु
खउपविश्यप्रातरग्निकार्यानंतरंदेशकालौसंकीर्त्यममगृहस्थाद्याश्रमसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंसमावर्त
नाख्यंकर्मकरिष्ये ॥ तदंगंगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्येइतिसंकल्प्यकृत्वा ॥
उद्धननादिभूसंस्कारंविधायतत्रपावकनामानंलौकिकमग्निंप्रतिष्ठाप्यसमित्त्रयमादायश्रद्धएहीत्यादिप्राणाया

 मांतंकृत्वासमावर्तनहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामीत्यादिव्याहृत्यंतमुक्त्वा ॥ प्रधानहोमे ॥जा 
तवेदसमग्निंपलाशसमिधायक्ष्ये ॥ व्याहृतीनामग्निंवायुंसूर्यंप्रजापतिंचाज्येनअग्निमाज्येन ॥ अंगहोमेवरु
 णंद्विरित्यादिपात्रासादनात्प्राक्कृत्वा ॥ प्राकृतानिदर्व्यादीन्यासाद्यपालाशींसमिधंदंतधावनमौदुंबरकाष्ठमा
र्द्रंउष्णशीताअपःक्षुरं आनडुहंगोमयं सौरभयुक्तंचंदनं वाससी कुंडले मणिं आदर्शं छत्रं दंडं उपान
हौ स्रजं आंजनं ग्रामप्रवेशार्थंरथादियानंचेतिवैकृतान्यासाद्यसामान्यप्रधानहोमांतंकृत्वाप्रधानहोमः ॥ इ
म ँ स्तोममर्हतेजातवेदसेरथमिवसंमहेमामनीषया ॥ भद्राहिनःप्रमतिरस्यस ँ सद्यग्नेसख्येमारिषामावयं
तवस्वाहा ॥ पालाशींसमिधंजुहोति ॥ जातवेदसेग्नयइदं॰ ॥ ततोव्यस्तसमस्तक्रमेणव्याहृतीराज्येनहु
त्वा ॥ त्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषंयद्देवानांत्र्यायुषंतन्मेअस्तुत्र्यायुष ँ स्वाहा ॥ अग्नयइ॰ ॥ इतिष
ट्प्रधानाहुतीर्हुत्वा ॥ ततइमंमेवरुणेत्यादित्रिवृदन्नहोमंपुण्याहवाचनांतंकृत्वा ॥ ततउपनयनेस्वीकृतानांस
कलब्रम्हचारिव्रतानांविसर्गंकरिष्येइतिसंकल्प्योपस्थेयदेवताअभिसंधायोपतिष्ठते ॥ अग्नेव्रतपतेव्रतमचा
रिषंतदशकंतन्मेराधि ॥ एवं वायोव्र॰ आदित्यव्रत॰ व्रतानांव्रत॰॥ इत्याद्युक्तरीत्याव्रतविसर्गंकृत्वा ॥ ततउ
दुत्यंचित्रमितिद्वाभ्यामादित्यमुपस्थाय ॥ उत्तरीयमजिनरूपंवासोनिदधाति ॥ उदुत्तमंवरुणपाशमस्मच्छ्र

थायेति ॥ ततोंतरीयंकच्छोपरिकटिप्रदेशेवेष्टितंवासोनिदधाति ॥ अवाधमंवरुणपाशमस्मच्छ्रथायेति ॥ अ
न्यद्वासःपरिधायद्विराचम्य ॥ मेखलांनिदधाति ॥ विमध्यमंवरुणपाशमस्मच्छ्रथायेति ॥ ततोदंडंनिदधा

ति ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामेति ॥ अजिनंवासोमेखलांदंडंचाप्सुतूष्णींप्रक्षिप्यापरे
णाग्निंप्राङ्मुखउपविश्यक्षुरꣳसंमृशति ॥ क्षुरोनामासिस्वधितिस्तेपितानमस्तेअस्तुमामाहिꣳसीरिति ॥
ततस्तूष्णींवपात्रेप्रदायशीतास्वप्सुउष्णाआनीयाभिमृशति ॥ शिवानोभवथसꣳस्पृशइति ॥ ततोदक्षिणं
गोदानमुंदइति ॥ आपउंदंतुजीवसेदीर्घायुत्वायवर्चसइति ॥ गोदानेऊर्ध्वाग्रान्कुशान्निदधाति ॥ ओषधेत्रा
यस्वैनमिति ॥ कुशोपरिक्षुरंनिदधाति ॥ स्वधितेमैनꣳहिꣳसीरिति ॥ततोगोदानस्थान्त्सकेशान्कुशान्वप
ति ॥ देवश्रूरेतानिप्रवपेइति ॥ उंदनादिवपनांतंवप्तुःकर्मवचनसामर्थ्यादाचार्यस्यवा ॥ ततोवप्तारंसमीक्ष
ते ॥ यत्क्षुरेणमर्चयथासुपेशसावप्तर्वपसिकेशाश्मश्रुवर्चयामुखंमानआयुःप्रमोषीरिति ॥ ततःश्मश्रूपपक्षक्र
मेणमुखस्यसर्वश्मश्रूणांवपनंशिखांविहायशिरस्थसर्वकेशानांबाहुमूलमारभ्यसर्वलोम्नांनखानांचपवनंकार
येत् ॥ स्नातकस्यबंधुजनःकश्चिदानडुहेगोमयेश्मश्रुलोमनखान्यंतर्धायगोष्ठेउदुंबरेदर्भस्तंबेवाऽवटंकृत्वानि
दधाति ॥(इदमहममुष्यामुष्यायणस्यपाप्मानमवगूहामीति) ॥ अत्रमंत्रेअमुष्यामुष्यायणस्येतिपदद्वयंनि
ष्कास्यस्नातकस्यव्यावहारिकंशर्मांतंनामगोत्रनामधेयंचप्रक्षिप्यमंत्रंपठेत् ॥ इदमहंगिरिधरशर्मणोनैतुंदनस्य
पाप्मानमवगूहामीत्येवंप्रकारेणपठिता) ॥ इमश्र्वाद्यवटेनिधायावटंमृत्तिकयापिधायकरंजकल्काद्युद्वर्तनेन
शरीरमलमुत्साद्य ॥ ततऔदुंबरकाष्ठेनार्द्रेणदंतान्प्रक्षालयति ॥ अन्नाद्यायव्यूहध्वंदीर्घायुत्वायव्यूहध्वंब्रह्म
वर्चसायव्यूहध्वंदीर्घायुरहमन्नादोब्रह्मवर्चसीभूयासमिति ॥ अथप्रधानस्नानं ॥ शीतमिश्राभिरुष्णाभि

 राद्भिः सर्वमंत्रांतेएकवारंस्नाति ॥ आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाइतिचतसृभिःपवमानःसुवर्जनइत्यनुवा 
केनचेति ॥ चकारेणस्नानेमंत्राणांसमुच्चयस्योक्तत्वात्सर्वमंत्रांतेएकंस्नानंकृत्वाद्विराचम्य ॥ शुक्लेवाससी
 परिधायद्विराचम्य ॥ बंधुजनैरानीतंसर्वसुगंधयुतंद्रव्यंचंदनापिष्टंवा ॥ तज्जलेनाभ्युक्ष्यतेनपाणीप्रलिप्य ॥
देवेभ्यःप्राचीनंनमस्कारांजलिंकरोति ॥ नमोग्रहायचाभिग्रहायचनमःशाकजंजभाभ्यानमस्ताभ्योदेव
ताभ्योयाअभिग्राहिणीरिति ॥ ततस्तेनैवांजलिनामुखमारभ्यानुलोममात्मानमनुलिंपति ॥ अप्सरा
सुचयोगंधोगंधर्वेषुचयद्यशः ॥ दैव्योयोमानुषोगंधःसमामाविशतादिहेति ॥ ततअहतेवाससीतूर्ष्णीं
जलेनाभ्युक्ष्य ॥ अंतरीयंवासःअधोनाभिउपरिजानुपरिदधाति ॥ सोमस्यतनूरसितनुवंमेपाहिस्वामातनूरा
विशशिवामातनूराविशेति ॥ ततोद्विराचम्यमंत्रावृत्त्याउत्तरीयंवासश्चपरिधायद्विराचम्य ॥ कटिसूत्रं
कच्छंचनिदधाति ॥ इतःपरंकटिसूत्रंकच्छधारणंचप्रतिषिध्यते ॥ ततोपरेणाग्निंप्राङ्मुखउपविश्यसुव
र्णाच्छादितंचंदनकाष्ठकृतंबादरंवामणिंकुंडलेदसूत्रप्रोतेदर्भेणप्रबध्याग्नावुपरिधारयन्तत्रदर्व्याजुहोतिपंचभि
र्मंत्रैः ॥ ॐ आयुष्यंवर्चस्य॑ रायस्पोषमौद्भिदं ॥ इद॑ हिरण्यमायुषेवर्चसेजैत्रायाविशतांमा॑ स्वाहा ॥
हिरण्यायेदं० ॥ १ ॥ उच्चैर्वाजिपृतनासाह॑ सभासाहंधनंजयं ॥ सर्वाःसमग्राऋद्धयोहिरण्ये 
स्मिन्त्समाभृताःस्वाहा ॥ हिर० ॥ २ ॥ शुनमह॑ हिरण्यस्यपितुरिवनामाग्रभीषं ॥ तंमाहिरण्यवर्चसंक
रोतुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोतुस्वाहा ॥ हिर० ॥ ३ ॥ प्रियंमाकुरुदेवेषुप्रियंमाब्रह्मणिकुरु ॥ प्रियंविश्वे

षुशूद्रेषुप्रियंमाकुरुराजसुस्वाहा॥ हि० ॥४॥ इयमोषधेत्रायमाणासहमानासहस्वती॥सामाहिरण्यवर्चसंकरो
तुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोतुस्वाहा ॥ हिर० ॥५॥ इतिपंचाहुतीर्हुत्वा ॥ ततःस्वाहाकारवर्जितैरेतै
रेवमंत्रैर्मणिंकुंडलेचोदपात्रेत्रिःप्रदक्षिणमावर्त्यसम्यक्प्रक्षाल्य ॥ ततोदक्षिणेकर्णेकुंडलंनिदधाति ॥ विराजं
चस्वराजंचाभिष्टीर्याचनोगृहे ॥ लक्ष्मीराष्ट्रस्ययामुखेतयामास॒ंसृजामसीति ॥ मंत्रावृत्त्यासव्येनिदधाति॥
ततोदक्षिणकर्णस्थंकुंडलंयथानपतततितथानिदधाति ॥ ऋतुभिष्ट्वार्तवैरायुषेवर्चसेसंवत्सरस्यधायसातेनसन्न
नुगृण्हासीति ॥ पुनर्मंत्रंपठित्वासव्यकर्णस्थंपिदधाति ॥ ततोग्रीवायांमणिंबध्नाति ॥ इयमोषधेत्रायमाणा
सहमानासहस्वती ॥ सामाहिरण्यवर्चसंकरोतुपुरुषुप्रियंब्रह्मवर्चसिनंमाकरोत्वपाशोसीति ॥ ततोद्वाभ्यांस्रजं
धारयतिशुभिकेशोभमारोहशोभयंतीमुखंमम ॥ मुखंचममशोभयभूया॒ंसंचभगंकुरु ॥यामाहरज्जमदग्निःश्र
द्धायैकामायास्यैइमांतांप्रतिमुंचेर्हभगेनसहवर्चसेति॥१॥ततस्त्रैककुदेनांजनेनान्येनकज्जलादिनावासकृदुक्ते
नमंत्रेणहस्ताभ्यांबहुकृत्वोयुगपदनक्ति ॥ यदांजनंत्रैककुदंजात॒ंहिमवतउपरि ॥तेनवामांजेर्हभगेनसहवर्च
सामयिपर्वतपूरुषमिति ॥ युगपदशक्तौसव्यमंक्त्वादक्षिणमनक्ति ॥तदाद्विवचनांतेपिमंत्रेचक्षुःसंस्कारत्वान्मं
त्रावृत्तिः॥ततआत्मानमादर्शेवेक्षते ॥ यन्मेमनःपरागतंयद्वामेअपरागतं ॥राज्ञासोमेनतद्वयमस्मासुधारयामसी
ति ॥ ततोदेवस्यत्वेत्यादिप्रतिगृण्हामीत्यंतेनवैणवंदंडंप्रतिगृह्यततोदंडंसकृन्मंत्रमुक्त्वात्रिरुन्मार्ष्टि ॥इंद्रस्य
वज्रोस्यशिवनौमापातमिति ॥ ततःसकृदुक्तेनमंत्रेणदंडंत्रिःप्रदक्षिणमुपरिशिरोभ्रामयति ॥ वेगवेजयास्मत्द्विष

तस्तस्करान्सरीसृपान्छ्वापदान्रक्षा॰ सिपिशाचात्पौरुषेयाद्भयान्नोदंडरक्षविश्वस्माद्भयाद्रक्षसर्वतोजाहित
स्करानन्नग्नः सर्ववृक्षेपुजायसेत्व॰ सपत्नहा ॥ जहिशत्रुगणान्त्सर्वान्त्संमतंमघवानिवेति ॥ यदिप्रमादाद्धस्ता
॥१५१॥ त्पतातितंपुनरादत्ते ॥ योमेदंडः परापतद्विहायसोधिभूम्यां ॥ इमंतंपुनराददेयमायुषेचबलायचेति ॥ इदंचदंड
धारणंयावज्जीवं॥मधुपर्कांतकर्मसमाप्त्यंतंवाआवश्यकं ॥ततःसकृन्मंत्रेणपादयोरुपानहौअवबध्ययुगपदवरो
हति ॥ युगपदशक्तौमंत्रावृत्तिः ॥ प्रतिष्ठेस्थोदेवतेमामासंतातप्तमिति ॥ ततश्छत्रंप्रतिगृण्हाति ॥
प्रजापतेःशरणमसिब्रह्मणश्छादिरिति ॥ ततश्छत्रधारणानंतरंग्रामप्रवेशार्थंरथादियानंआरुह्ययत्रपूजांकरिष्यं
तोभवंतिमातुलाद्याः ॥ यथावास्वस्यपूजाभवतितथावेदनंकृत्वापितत्गृहंमधुपर्कपूजार्थंस्नातकोगच्छेत् ॥
यदातुगोष्ठेसमावर्तनकर्मक्रियतेतदारात्रिपर्यंतंतत्रैवस्थित्वारात्रौरथाद्यारुह्यगच्छेत् ॥ सूर्यरश्मिदर्शनप्रतिषेध
स्तुगोष्ठेकरणपक्षएव ॥ आनयंत्यस्मैरथंग्रामप्रवेशार्थमश्वंहस्तिनंवा ॥ स्नातकोरथमारोहति ॥ रथं
तरमसिवामदेव्यमसि ॥ बृहदस्यंकौन्यंकावभितोरथंयौध्वांतंवाताग्रमनुसं वरंतौदूरेहेतिरिंद्रियावान्पतत्री
तेनोग्नयःपप्रयःपारयंतु ॥ अयंवामश्विनारथोमादुःखेमासुखेरिषत् ॥ अरिष्टःस्वस्तिगच्छतुविविघ्नन्त
भिदासतः ॥ इहधृतिरिहाविधृतिरिहरमइहरमतामितिरथं ॥ अश्वमारोहति ॥ अश्वोसिहयोसि
मयोस्यत्योसिनरोस्यर्वासिसप्तिरसिवाज्यसिवृषासिनृमणाअसिययुर्नामासीति ॥ एकादशभिरश्वनामभि ॥१५१॥
रश्वं ॥ गजमारोहति ॥ इंद्रस्यत्वावज्रेणाभ्युपविशामिवहकालवहश्रियंमाभिवहहस्त्यसिहस्तियश

ल्प्यकृत्वा ॥ ततोमंत्रद्वयेनतौप्रत्यक्षौपासनाग्नीस्वयंपत्नीभ्यांवास्वस्वौपासनाग्निंयुगपद्देवमध्यमेस्थंडिले
स्थापयेत् ॥ भवंतंनःसमनसौसमोकसावरेपसौ ॥ मायज्ञ ँ हिं ँ सिष्टंमायज्ञपतिंजातवेदसौशिवौभवतम
द्यनः ॥ अग्नावग्निश्चरतिप्रविष्टऋषीणांपुत्रोअधिराजएषः ॥स्वाहाकृत्यब्रह्मणातेजुहोमिमादेवानांमिथुयाक
र्भागधेयंइतिद्वाभ्यां ॥ ततस्तमग्निंप्रज्वाल्यसमिन्त्रयमादायश्रद्धएहीत्यादिप्राणायामांतंकृत्वाऔपासना
ग्न्योःसंसर्गहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ जातवेदसमग्निमिध्मेनेत्यादिव्याहृत्यंतमुक्त्वाप्र
प्रधानहोमे ॥ तंतुमंतमग्निंत्रिश्चरुणायक्ष्ये ॥ततःवरुणंद्विरित्यादिदेवतायक्ष्यइत्यंतमुक्त्वासमिधोग्नावाधाय ॥
उक्तप्रकारेणचरु ँ श्रपयित्वाआघारवतातंत्रेणहोमःकार्यः ॥ व्याहृत्यंतंहुत्वाप्रधानहोमः ॥ तंतुंतन्वन्रज
सोभानुमन्विहिज्योतिष्मतःपथोरक्षधियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजन ँ स्वा
हा ॥ तंतुमतेग्नयइदं • ॥ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेस ँ सृजेथामयंच ॥ पुनःकृण्व ँ स्त्वांपित
रंयुवानमन्वाता ँ सीत्वयितंतुमेत ँ स्वाहा ॥ तंतुमतेग्नय॰ ॥ त्रयस्त्रि ँ शत्तंतववोयेवितत्निरेयइमंयज्ञ ँ
स्वधयाददंतेतषांछिन्नंप्रत्येतद्दधामिस्वाहाघर्मोदेवा ँ अप्येतुस्वाहा ॥तंतुमतेग्नय॰ ॥इतिचरोराहुतित्रयंहुत्वा ॥
ततइमंमेवरुणेत्यादिसंस्थाजपांतंकर्मसमापयेत् ॥ नात्रत्रिवृदन्नहोमः ॥कर्मांगत्वेनब्राह्मणभोजनंसंकल्प्य ॥
आचार्यायदक्षिणांदत्वा तेभ्यश्चाशिषःसंप्राप्यप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततो

यावज्जीवमेतस्याग्नेः परिचर्याकार्या ॥ अग्न्युपघातेपुनराधानप्राप्तौसत्यांभार्याद्वयान्वारंभेणपुनराधानोक्तरीत्याअग्नेरुत्पत्तिःकार्या ॥ अग्न्योःसंसर्गस्यजातत्वान्नपृथगग्न्योरुत्पत्तिः॥ केचित्तुपुनराधानेनाग्निद्वयंपृथगुत्पाद्याऽग्न्योःसंसर्गविधिनासंसर्गकुर्यादितिवदंति ॥ तृतीयभार्यादावप्येवमेवविधिः ॥ इतिश्रीरुद्रस्वामिमतानुसारीद्विभार्याग्न्योःसंसर्गप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १५ ॥ ॥ अथान्वारंभणीयस्थालीपाक प्रारंभः

सूत्रानुक्तोपिशिष्टाचारदर्शनाल्लिख्यते ॥ सचगृहप्रवेशस्थालीपाकानंतरंपूर्णमास्याःपूर्वचतुर्दश्यांपूर्वाण्हेकार्यः ॥ गृह्याग्नेःपश्चात्सपत्नीकःप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यदर्शपूर्णमासस्थालीपाकंकर्तुंदशहोतृसरस्वतहोमपूर्वकंअन्वारंभणीयस्थालीपाकंकरिष्येइतिसंकल्प्यगणेशपूजादिकृत्वा ॥अग्निंप्रज्वाल्यससितद्वयमादायश्रद्धएहीत्यादिअन्वारंभणीयस्थालीपाकहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ अग्निंसमिद्भिःवाचस्पतिंब्रह्माणंचाज्येनपूर्णमासममावास्यांचाज्येनअग्नाविष्णू॥सरस्वती॥सरस्वंतं॥अग्निंभगिनं॥अग्निंस्विष्टकतंच वरुणायक्ष्ये ॥ सामान्यप्रायश्चित्तदेवताश्चाज्येनएतादेवतायक्ष्यइत्युक्त्वासमिधावग्नावाधायपरिसमुह्यपरिस्तीर्यउपयुक्तानिपात्राण्यासाद्यप्रोक्षणीसंस्कारादिकृत्वाआपूर्विकत्वादाहुतिपरिमाणमिध्मंतूष्णींहुत्वा ॥ दर्व्याज्यमादाय ॥ चित्तिस्त्रुक् ॥ चित्तमाज्यं ॥ वाग्वेदिः ॥ आधीतंबर्हिः ॥ केतोअग्निः ॥ वि

ज्ञातमग्निः ॥ वाक्पतिर्होता ॥ मनउपवक्ता ॥ प्राणोहविः ॥ सामाध्वर्युः ॥ इतिदशहोतारंमनसाअनुद्रुत्य ॥ वाचस्पतेविधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिःसोमंपिबतु ॥ आस्मासुनृम्णंधात्स्वाहाइत्यंतंपठन्जुहोति ॥ वाचस्पतयेब्रह्मणइदं० ॥ ततःसारस्वतहोमः ॥ पूर्णापश्चादुतपूर्णापुरस्तादुन्मध्यतःपौर्णमासीजिगाय ॥ तस्यांदेवाअधिसंवसंतउत्तमेनाकइहमादयंताᳪस्वाहा ॥ पूर्णमासायेदं० ॥ यत्तेदेवाअदधुर्भागधेयममावास्येसंवसंतोमहित्वा ॥ सानोयज्ञंपिपृहिविश्ववारेरयिंनोधेहिसुभगेसुवीरᳪस्वाहा ॥ अमावास्यायाइदं० ॥ ततउक्तरीत्याचरुश्रपणंकृत्वाचरुहोमः॥ दर्व्यासकृदवदायजुहोति ॥ अग्नाविष्णुभ्याᳪस्वाहा ॥ अग्नाविष्णुभ्यामिदं० ॥सरस्वत्यैस्वाहा ॥ सरस्वत्याइदं० ॥ सरस्वतेस्वाहा ॥ सरस्वतइदं० ॥ अग्नयेभगिनेस्वाहा ॥ अग्नयेभगिनइदं० ॥ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ततःसर्वप्रायश्चितंव्याहृतिचतुष्टयंहुत्वाचार्यायदक्षिणांदत्वाप्रमादात्कुर्वतांकर्मेतिकर्मसाद्गुण्यायाविष्णुंस्मरेत् ॥ इत्यन्वारंभणीयस्थालीपाकः ॥ ॥ ७ ॥ ॥ ७ ॥

॥ १६ ॥ ॥ अथ दशपूर्णमासस्थालीपाकप्रयोगः प्रारंभः ॥

तस्यचायंक्रमः ॥ गृहप्रवेशस्थालीपाकानंतरंपौर्णमासंपर्वयदाभवतितदाचतुर्दश्यांदशहोतृसारस्वतहोमपूर्वंकंअन्वारंभणस्थालीपाकंकृत्वापौर्णमास्याःस्थालीपाकःस्वकालेकार्यः ॥ श्रौतभक्तित्वादिष्टिकालोस्यकालः

॥ अथप्रयोगः ॥ सपत्नीकोगृह्याग्नेःपश्चादुपविश्याचम्यप्राणानायम्यदेशकालौसंकीर्त्यदर्शपूर्णमासस्था लीपाकाभ्यांयक्ष्ये ॥ तत्राद्यपौर्णमासस्थालीपाकेनयक्ष्येइतिपौर्णमास्यां ॥ पूर्वसंकल्पितदर्शस्थालीपाकेन यक्ष्यइत्यमावास्यायामितिसंकल्प्यगणेशपूजनादिकृत्वाग्निंप्रज्वाल्यसमिद्वयमादायश्रद्धएहीत्यादिप्राणाया मांतंकृत्वापौर्णमासस्थालीपाकहोमकर्मणियक्ष्यमाणादेवताःपरिग्रहीष्यामि ॥ अग्निंसमिद्भ्यांअग्निंचरुणा अग्निं स्विष्टकृतंचरुणा ॥ प्रायश्चित्तदेवताश्चाज्येनयक्ष्यइत्युक्त्वासमिधावग्नावाधायपरिसमूहनादिकृत्वा शृतंचरुंबर्हिष्याधायसमिद्वयात्मकंइध्मंतूष्णींहुत्वा॥दर्व्याचरोःसकृदवदायजुहोति ॥ अग्नयेस्वाहा ॥ अग्न यइदं॰ अग्नयेस्विष्टकृतेस्वाहा॰ अग्नयेस्विष्टकृतइदं॰ ॥ ततःसामान्यप्रायश्चित्तंचाज्येनहुत्वा ॥ परिषे कविसर्गांतंकृत्वाविष्णुंस्मरेत् ॥ इतिपौर्णमासस्थालीपाकः ॥ एवमेवदर्शस्थालीपाकः ॥ ॥ छ ॥

## ॥ १७ ॥ ॥ अथआग्रयणस्थालीपाक प्रारंभः ॥

श्रीगणेशायनमः ॥ सूत्रानुक्तोपिशिष्टपरिगृहीतत्वाल्लिख्यते ॥ सचशरदिवसंतेचकार्यः॥ अग्नेःपश्चात्प्राङ् मुखःसपत्नीकउपविश्यदेशकालौसंकीर्त्यव्रीह्यादिधान्यानांप्राशनाधिकारसिद्धिद्वाराश्रीपरमेश्वरप्रीत्यर्थंपं चाज्यानिहोमपूर्वकंआग्रयणस्थालीपाकंकरिष्येइतिसंकल्प्यगणेशपूजादिकृत्वाऽग्निंप्रज्वाल्यसमिद्वयमादा यश्रद्धएहीत्यादिप्राणायामांतंकृत्वा ॥ आग्रयणस्थालीपाकहोमकर्मणियायक्ष्यमाणदेवतास्ताःपरिग्रहीष्या

मि । तूष्णीमग्निमिध्मेन ॥ इंद्रंद्यावापृथिव्यौऋतून् ॥ इदुवत्सरपरिवत्सरसंवत्सरान् ॥ देवांश्चाज्येन ॥ इंद्राग्नी ॥ विश्वान्देवान् ॥ द्यावापृथिव्यौचरुणायक्ष्ये ॥ अग्निँ स्विष्टकृतंचरुणा ॥ सामान्यप्रायश्चित्तदेवताश्चाज्येनयक्ष्यइत्युक्त्वासमिधावग्नावादध्यात् ॥ अयमापूर्विकपक्षेणकार्यः ॥ परिसमूहनादिकृत्वा तूष्णीमिध्मंहुत्वापंचाज्यानीराज्येनजुहोति ॥ शतायुधायशतवीर्यायशतोतयेभिमातिषाहे ॥ शतंयोनःशरदोअजीतानिंद्रोनेषदतिदुरितानिविश्वास्वाहा ॥ इंद्रायेदं० ॥ येचत्वारःपथयोदेवयानाअंतराद्यावापृथिविवीयंति ॥ तेषांयोअज्यानिमजीतिमावहात्तस्मैनोदेवाःपरिदत्तेहसर्वेस्वाहा ॥ द्यावापृथिवीभ्यामिदं० ॥ ग्रीष्मोहेमंतउतनोवसंतःशरद्वर्षाःसुवितंनोअस्तु ॥ तेषामृतूनाँ शतशारदानांनिवातएषामभयेस्यामस्वाहा ॥ ऋतुभ्यइदं० ॥ इदुवत्सरायपरिवत्सरायसंयत्सरायकृणुताबृहन्नमः ॥ तेषांवयँ सुमतौयज्ञियानांज्योगजीताअहताःस्यामस्वाहा ॥ इदुवत्सरपरिवत्सरसंवत्सरेभ्यइदं० ॥ भद्रान्नःश्रेयःसमनैष्टदेवास्त्वयावसेनसमशीमहित्वा ॥ सनोमयोभूःपितोआविशस्वशंतोकायतनुवेस्योनःस्वाहा ॥ देवेभ्यइदं० ॥ इतिपंचाज्याहुतीर्हुत्वा ॥ ततःपूर्ववच्चरुंशृतमुदगुद्वास्यबर्हिष्याधायदर्व्योपहत्यसकृदवदायजुहोति ॥ इंद्राग्निभ्याँ स्वाहा इंद्राग्निभ्यामिदं० ॥ विश्वेभ्योदेवेभ्यःस्वाहा ॥ विश्वेभ्योदेवेभ्यइदं० ॥ द्यावापृथिवीभ्याँ स्वाहा ॥ द्यावापृथिवीभ्यामिदं० ॥ अग्नयेस्विष्टकृतेस्वाहा ॥ अग्नयेस्विष्टकृतइदं० ॥ ततःआज्येनव्याहृति चतुष्टयंसर्व

प्रायश्चित्तंहुत्वाग्निंप्रार्थ्याचार्यायदक्षिणांदत्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ततःहुतशेषेणब्राह्मणान्त्संभो
ज्यस्वयंनवान्नप्राशनंकुर्यात् ॥ यद्यप्याग्रयणंकंठतोनोक्तंतथापिश्रौतमध्येस्मार्तम्नानंकुर्वतासूत्रकृतोक्त
प्रायमेव ॥ श्रौतभाक्त्वेपिस्थालीपाकानांदर्विहोमत्वान्नसर्वातिदेशः ॥ आग्रयणस्थालीपाकत्वादेवब्राह्मण
परिवेषणोत्तरंभोजनात्प्रागेवपुरोडाशवत्स्वयंप्राश्यपत्नींचप्राशयित्वाशुद्धाचमनोत्तरंभोजनंकार्यं ॥ तथैवस
कलहिरण्यकेशीशिष्टानुष्ठानपरंपरादर्शनंच ॥ इत्याग्रयणस्थालीपाकः ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८ ॥ ॥ पुनराधानप्रयोगः ॥

श्रीगणेशायनमः ॥ पुनराधानसूत्रव्याख्यावृत्तौत्रुटितातथापिसकलशिष्टपरिगृहीतत्वात्तत्रप्रयोगउच्यते ॥ य
स्मिन्नग्नौविवाहहोमःसऔपासनाग्निस्तस्मिन्त्सायंप्रातर्होमेनआहिताग्निर्भवति ॥ दर्शपूर्णमासपर्वणोःस्था
लीपाकःक्रियतेतेनदर्शपूर्णमासयाजित्वंच॥अत्रसर्वाणिगृह्याणिकर्माणिपुंसवनादीनिप्रजासंस्कारकाणिचभ
वंति॥अथपुनराधाननिमित्तानि ॥सत्यग्नौप्रतिबंधादिनाऽऽद्वादशाहंहोमविच्छेदेप्रायश्चित्तं ॥ आज्यंसंस्कृत्य
मनोज्योतिरित्येकाज्यातिंहुत्वाऽयाश्चेतिचतुष्टयंचजुहुयात् ॥तथाहि॥उद्धननादिभूसंस्कारंविधायतत्रश्रोत्रिया
गारादाहृतमग्निंप्रतिष्ठाप्यप्रज्वाल्यपरिसमुह्यपरिस्तीर्यपरिषेकंकृत्वाऽऽज्यंसंस्कृत्य ॥ होमविच्छेदनिमि
त्तंप्रायश्चित्तंकरिष्येइतिसंकल्प्यतूष्णीमेकांसमिधंहुत्वा ॥ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञं सामिमंद

धातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधामिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइ० ॥ ततःप्रायश्चित्तार्थं व्याहृतिचतुष्टयंहुत्वा ॥ सर्वान्होमान्प्रतिसंख्यायक्रमेणहोमःकार्यः॥द्वादशाहादूर्ध्वंपुनराधेयः ॥ अथाग्निना शेप्रायश्चित्तं॥ अथयदिनष्टस्तदाद्वादशघटिकामध्येआगामिहोमकालात्पूर्वंस्वयोनितउत्पन्नमग्निंप्रतिष्ठाप्य प्रायश्चित्तंकार्यं ॥ तच्च ॥ अयाश्चाग्नेरित्येकाहुतिः ॥ व्यस्तसमस्तक्रमेणव्याहृतिहोमोवा ॥ अथवादं पत्योर्मध्येन्यतरस्योपवासः ॥ सायमनुगतेआप्रातरुपवासः ॥ प्रातरनुगतेआसायमुपवासः ॥ इ तिविवाहमध्येतदूर्ध्वमपिइदमेवप्रायश्चित्तंकार्यं ॥ अथआलस्येननष्टश्चेत्पुनराधानं ॥ पतितरजस्वलादिसं सर्गेन्याग्निनाग्निसंसर्गेभार्यायाःसीमातिक्रमेदर्शपूर्णमासतृतीयस्थालीपाकाकरणेसमारूढसामिन्नाशेगृह्या ग्नेरुपघातेचसतिपुनःसंधानंकार्यं ॥ तत्रकालातिक्रमेसतिप्रायश्चित्तं ॥ यजमानःपत्न्यासह कृतनित्यक्रियेदेशकालौसंकीर्त्यममप्रमादादेतावत्कालपर्यंतंगृह्याग्नित्यागजन्यदोषपरिहारद्वाराश्रीपरमे श्वरप्रीत्यर्थंप्रत्यब्दंप्राजापत्यप्रायश्चित्तंअमुकप्रत्याम्नायेनन्यूनकालेलेतावत्प्रायश्चित्तंवाकरिष्येइतिसंकल्प्य कालविच्छेदगणनंकार्यं ॥ तत्रत्रिरात्रविच्छेदेप्राणायामशतं ॥ विंशतिरात्रविच्छेदेएकरात्रमुपवासः॥मासद्व येत्रिरात्रमुपवासः ॥ संवत्सरविच्छेदेप्रत्यब्दंप्राजापत्यः ॥ आलस्यादिनाबुद्धिपूर्वमग्नित्यागेतुतत्तत्काला नुसारेणेदंप्रायश्चित्तं ॥ आद्वादशाहंत्रिरात्रमुपवासः ॥ आमासंद्वादशरात्रमुपवासः ॥ आब्दंमासंप योव्रतं ॥ आद्विवर्षंचांद्रायणं ॥ आत्र्यब्दंचांद्रायणंसोमायनंच ॥ तदूर्ध्वमब्दकृच्छ्रंधनिनोगोदानंचेत्यादि

देशकालकर्तृतारतम्येनप्रायश्चित्तंदंपतीसहकुर्वीयातां ॥ एवंकृतेप्रायश्चित्तेलुप्तानांसायंप्रातर्होमानांतथादर्श
पूर्णमासस्थालीपाकानांचपर्याप्तंव्रीह्यादिद्रव्यमाज्यंचब्राह्मणायदत्त्वा ॥ पुनराधानार्हेनक्षत्रेनुकूलेचंद्रेचसप
त्नीकःप्राङ्मुखउपविश्यदेशकालौसंकीर्त्यममविच्छिन्नस्यगृह्याग्नेःपुनःसंधानाख्यंकर्मकरिष्यइतिसंकल्प्य
गणेशपूजनादिकृत्वा ॥ अग्न्यायतनंकटादिनापरिश्रित्याभ्यादिनोद्धत्यवोक्ष्यसिकताभिरवकीर्यआखूत्क
रादिभौमान्पालाशौदुंबरादिवानस्पत्यांश्चसंभारांस्तूष्णीमग्न्यायतनेसंभृत्यउदुंबरशाखाभिरग्न्यायतनंप्रच्छा
द्यस्वयोनितउत्पन्नमग्निमाहृत्यमृच्छरावेकृत्वाभूर्भुवःसुवरोमित्यायतनेप्रतिष्ठाप्यप्रज्वाल्यसमिन्त्रयमादाय
श्रद्धएहीत्यादिप्राणायामांतंकृत्वा ॥ पुनराधानहोमकर्मणियक्ष्यमाणदेवताःपरिग्रहीष्यामि ॥जातवेदसमग्नि
मिध्मेनेत्यादिव्याहृत्यंतमुक्त्वा ॥ प्रधानहोमे ॥ मिंदवंतमग्निंद्विराज्येन॥ तंतुमंतमग्निंत्रिराज्येन ॥अभ्यावर्तिन
मग्निंचतुराज्येन अग्निंवायुंसूर्यंप्रजापतिंप्रत्येकमाज्येन॥अयासमग्निमाज्येन॥मनस्वंतमग्निमाज्येन ॥ प्रजाप
तिमाज्येन ॥ सप्तवंतमग्निमाज्येन ॥ वाचस्पतिंब्रह्माणमाज्येन ॥ अंगहोमेवरुणंद्विरित्यादिस ॰ स्रावेणेत्यं
तमुक्त्वासमिधोग्नावाधायपरिसमूहनादिव्याहृत्यंतंहुत्वा ॥ प्रधानहोमंकरोति ॥ यन्मआत्मनोमिंदाभूदग्नि
स्तत्पुनराहार्जातवेदाविचर्षणिःस्वाहा ॥ मिंदवतेग्नयइदं॰ ॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः पुनर्मेअ
श्विनायुवंचक्षुराधत्तमक्ष्योःस्वाहा ॥ मिंदवतेग्नयइदं॰ ॥ तंतुंतन्वन्रजसोभानुमन्विहिज्योतिष्मतःपथोरक्ष

धियाकृतान् ॥ अनुल्बणंवयतजोगुवामपोमनुर्भवजनयादैव्यंजनँ स्वाहा ॥ तंतुमतेग्नयइदं॰ ॥ उद्बुध्य
स्वाग्नेप्रतिंजागृह्येनमिष्टापूर्तेसँ सृजेथामयंच ॥ पुनःकृण्वँ स्त्वापितरंयुवानमन्वाताँ सीत्वयितंतुमेतँ
स्वाहा ॥ तंतुमतेग्नयइदं ॥ त्रयस्त्रिँ शत्तंतवोयेवितत्निरेयइमंयज्ञँ स्वधयाददंतेतेषांछिन्नंप्रत्येतद्दधामि
स्वाहाघर्मोदेवाँ अप्येतुस्वाहा ॥ तंतुमतेग्नयइदं॰ ॥ अग्नेभ्यावर्तिन्नभिनआवर्तस्वायुषावर्च्चे
सासन्यामेधयाप्रजयाधनेनस्वाहा ॥ अभ्यावर्तिनेग्नयइदं॰॥ अग्नेअंगिरःशतंतेसंत्वावृतःसहस्रंतउपावृतः॥
तासांपोषस्यपोषेणपुनर्नोनष्टमाकृधिपुनर्नोरयिमाकृधिस्वाहा ॥ अभ्यावर्तिनेग्नयइदं॰ ॥ पुनरूर्जानिवर्त
स्वपुनरग्नइषायुषा ॥ पुनर्नःपाहिविश्वतःस्वाहा ॥ अभ्यावर्तिनेग्नयइदं॰ ॥ सहरय्यानिवर्तस्वाग्नेपिन्वस्व
धारया ॥ विश्वप्स्नियाविश्वतस्परिस्वाहा ॥ अभ्यावर्तिनेग्नयइदं॰ ॥ भूःस्वाहा ॥ अग्नयइदं॰ ॥ भुवः
स्वाहा ॥ वायवइदं॰ ॥ सुवःस्वाहा ॥ सूर्यायेदं॰ ॥ भूर्भुवःसुवःस्वाहा ॥ प्रजापतयइदं॰ ॥ अयाश्चा
ग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि ॥ अयंसामनसाधृतोयसाहव्यमूहिषेयानोधेहिभेषजँ स्वाहा॥ अया
सेग्नयइदं॰ ॥ मनोज्योतिर्जुषतामाज्यंविच्छिन्नंयज्ञँ समिमंदधातु ॥ याइष्टाउषसोनिम्रुचश्चताःसंदधा
मिहविषाघृतेनस्वाहा ॥ मनसेज्योतिषइदं॰ ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ य

त्कामास्तेजुहुमस्तन्नोअस्तुवय  स्यामपतयोरयीणा  स्वाहा ॥ प्रजापतयइदं० ॥ सप्ततेअग्नेसमिधःसप्त जिव्हाःसप्तर्षयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ सप्तवतेग्न यइदं० ॥ चित्तिस्रुक् ॥ चित्तमाज्यं ॥ वाग्वेदिः ॥ आधीतंबर्हिः ॥ केतोअग्निः ॥ विज्ञातमग्निः ॥ वाक्पतिर्होता ॥ मनउपवक्ता ॥ प्राणोहविः ॥ सामाध्वर्युः ॥ इतिदशहोतारंमनसानुद्रुत्य ॥ वाचस्पतेविधेनामन् ॥ विधेमतेनाम ॥ विधेस्त्वमस्माकंनाम ॥ वाचस्पतिःसोमंपिबतु ॥ आस्मासुनृम्णंधात्स्वाहा ॥ इतिपठन्जुहोति ॥ वाचस्पतयेब्रह्मणइदं० ॥ इत्यष्टादशप्रधानाहुतीर्हुत्वा ॥ ततइमंमेवरुणेत्यादिसंस्थाजपांतंसमाप्य ॥ त्रिवृदन्नहोमंपुण्याहवाचनांतंकृत्वा ॥ ततःपुनराधानांगभूतेनआग्नेयस्थालीपाकेनयक्ष्यइतिसंकल्प्यगृहप्रवेशस्थालीपाकरीत्याकार्यः ॥ कर्मसांगतासिद्ध्येगुरवेवाससीधेनुमनड्वाहंवायथाशक्तिदक्षिणांदत्वा ॥ कर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ इतिहिरण्यकेशिस्मार्तप्रयोगरत्नेवैशंपायनमहेशभट्टकृतौपुनराधेयप्रयोगः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ९१ ॥ ॥ अथ सभार्यस्यप्रवासविधिप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ यदिसभार्यःप्रयास्यन्तर्ह्यग्निंसमारोप्यगच्छेत् ॥ अथसमित्समारोपः ॥ अयंते

येनिर्ऋत्वियोयतोजातोअरोचथाः ॥ तंजानन्नग्नआरोहाथानोवर्धयारयिं ॥ इतिसमिधमग्नौप्रताप्यशुचिर्धा
रयति ॥ अथात्मसमारोपः ॥ हस्तंप्रताप्यमुखेननासिकयावाऊष्माकर्षणंकरोति ॥ यातेअग्नेयज्ञियातनूस्त
येह्यारोहात्मात्मानं ॥ अच्छावसूनिकृण्वन्नस्मेनर्यापुरूणि ॥ यज्ञोभूत्वायज्ञमासीदस्वांयोनिं ॥ जातवेदो
भुवआजायमानःसक्षयएहीति ॥ प्रत्यक्षस्याग्नेःसकाशाद्देवतारूपस्याग्नेररण्योरात्मनिवाऽऽनयनंसमारोप
णं ॥ तद्यजमानोध्वर्युर्वाकुर्यात् ॥ आत्मसमारोपणंतुयजमानस्यैव ॥ नद्युत्तरणेग्रामसीमातिक्रमेचदंप
त्योरन्वारंभः ॥ आत्मसमारोपपक्षेसर्वदाअस्पृश्यस्पर्शनंजलेनिमज्यस्नानंस्त्रीगमनंचाकुर्वन्मूत्रपुरीषोत्स
र्गेशौचमकृत्वाचिरकालंनतिष्ठेत् ॥ यत्रगत्वावसतितत्रउद्धननादिसंस्कृतायतनेश्रोत्रियागारादाहृतमग्निंसं
स्थाप्यप्रज्वाल्यतत्रसमित्स्थमग्निमवरोपयति ॥ आजुह्वानःसुप्रतीकःपुरस्तादग्नेस्वांयोनिमासीदसाध्या ॥
अस्मिन्त्सधस्थेअध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेसꣳसृजेथा
मयंच ॥ पुनःकृण्वꣳस्त्वापितरंयुवानमन्वाताꣳसीत्वयितंतुमेतमितिद्वाभ्यामवरोप्यौपासनादिकंकुर्यात् ॥
अथात्मारूढाग्न्यवरोपः ॥ उद्धननादिसंस्कृतायतनेग्निमानीयप्रज्वाल्यतत्रमुखेननासिकयावाश्वासमवरो
पयति ॥ उपावरोहजातवेदःपुनस्त्वंदेवेभ्योहव्यंवहनःप्रजानन् ॥ आयुःप्रजाꣳरयिमस्मासुधेह्यजस्रोदी
दिहिनोदुरोणइति ॥ इतिसभार्यस्यप्रवासविधिःसमाप्तः ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ १०० ॥ ॥ अथांतरितस्थालीपाकानां तंत्रप्रयोगप्रारंभः ॥



श्रीगणेशायनमः ॥ ॥ यदिपार्वणस्थालीपाकोनकृतस्तदाआगाम्यन्वाधानावधिरेतस्यगौणकालः ॥
 गौणकालेपिनकृतस्तदाआगामिपार्वणेनसहकार्यः ॥ अंतरितस्थालीपाकममुकस्थालीपाकेनसहकरिष्य
इतिसंकल्प्यएकंचरुंस्थालीपाकतंत्रेणश्रपयित्वा ॥ इदमग्नयेपथिकृते इदमग्नये ॥ इदमग्नयेस्विष्टकृतेति
यथादैवतंविभज्यक्रमेणहुत्वान्यत्पूर्ववत् ॥ यदिद्वितीयोगौणकालेपिनकृतस्तदाद्वौविच्छिन्नौतृतीयस्थाली
पाकेनसहकर्तव्यौ ॥अंतरितस्थालीपाकौतृतीयस्थालीपाकेनसहतंत्रेणकरिष्यइतिसंकल्प्यएकंचरुंश्रपयित्वा
इदमग्नयेपथिकृतेइदमग्नयेवैश्वानराय ॥ इदमग्नये ॥ इदमग्नयेस्विष्टकृतेइति ॥ यथादैवतंविभज्यक्रमे
णआहुतिचतुष्टयंहुत्वान्यत्पूर्ववत् ॥ यदितृतीयस्थालीपाकंगौणकालेपिनकरोतितदापुनराधानंकुर्यात् ॥
पौर्णमास्यांपथिकृदमावास्यायांवैश्वानरइतिद्रष्टव्यं ॥ इतिप्रवासविधिःसमाप्तः ॥ ॥ ५ ॥

## ॥ १०१ ॥ ॥ अथ ग्रहयज्ञप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ तत्रग्रहपीठमध्येवर्तुलेद्वादशांगुलेप्राङ्मुखंसूर्यंरक्तपुष्पाक्षतैः ॥ ॐ आसत्येनर ॥१८२॥
जंसावर्तमानोनिवेशयन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ भूर्भुवःसुवः ॥
कलिंगदेशोद्भवकाश्यपसगोत्रसूर्यइहागच्छइहतिष्ठसूर्यायनमः ॥ सूर्यआवाहयामि ॥ ततःआग्नेयेचतुरस्रे

चतुर्विंशांगुलेप्रत्यङ्मुखंसोमंश्वेतपुष्पाक्षतैः ॥ ॐ आप्यायस्वसमेतुतेविश्वतःसोमवृष्णियं ॥ भवावाज
स्यसंगथे ॥ भूर्भुवःसुवः ॥ यमुनातीरोद्भवआत्रेयसगोत्रसोमइहागच्छइह० सोमायनमःसोमंआवाहया
मि ॥ ततःदक्षिणेत्रिकोणेत्र्यंगुलेदक्षिणाभिमुखंभौमंरक्तपुष्पाक्षतैः ॥ ॐ अग्निर्मूर्धादिवःककुत्पतिःपृथि
व्याअयं ॥ अपा ँ रेता ँ सिजिन्वति ॥ भूर्भु० अवंतीसमुद्भवभारद्वाजसगोत्रभौमइ० भौमा० भौमं० ॥
ततःईशान्येबाणाकारेचतुरंगुलेउदङ्मुखंबुधंपीतपुष्पाक्षतैः ॥ ॐ उद्बुध्यस्वाग्नेप्रतिजागृह्येनमिष्टापूर्तेस
ँ सृजेथामयंच ॥ पुनःकृण्व ँ स्त्वापितरंयुवानमन्वाता ँ सीत्वयितंतुमेतं ॥ भूर्भु० मगधदेशोद्भवआत्रे
यसगोत्रबुधइहा० बुधा० बुधं० ॥ उत्तरेदीर्घचतुरस्रेचतुर्विंशांगुलेउदङ्मुखंबृहस्पतिंपीतपुष्पाक्षतैः ॥ ॐ
बृहस्पतेअतियदर्योअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसर्त्तप्रजाततदस्मासुद्रविणंधेहिचित्रं ॥
भूर्भु० सिंधुदेशोद्भवआंगिरसगोत्रबृहस्पतेइहागच्छ० बृह० बृहस्पतिं० ॥ ततःपूर्वेपंचकोणेनवांगुलेप्राङ्मु
खंशुक्रंशुक्लपुष्पाक्षतैः ॥ ॐ शुक्रंतेअन्यद्यजतंतेअन्यद्विषुरूपेअहनीद्यौरिवासि ॥ विश्वाहिमायाअवसि
स्वधावोभद्रातेपूषन्निहरातिरस्तु ॥ भूर्भु० भोजकटदेशोद्भवभार्गवसगोत्रशुक्रइहा० शुका० शुक्रं० ॥ त
तःपश्चिमेधनुषिद्व्यंगुलेप्रत्यङ्मुखंशनिंकृष्णपुष्पाक्षतैः ॥ॐ शंनोदेवीरभिष्टयआपोभवंतुपीतये॥ शंयोरभिस्र

  ॥१८३॥

वंतुनः ॥ भूर्भु॰ सौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनैश्चरइहा॰ शनैश्च॰ शनैश्चरं॰ ॥ततःनैर्ऋत्येशूर्पाकारेद्वादशां
गुलेदक्षिणामुखंराहुंकृष्णपुष्पाक्षतैः ॥ ॐ कयानश्चित्रआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥
भूर्भुवः॰ राठिणापूरोद्भवपैठिणसगोत्रराहोइहा॰ राहवे॰ राहुंआ॰ ॥ वायव्येध्वजाकारेदक्षिणाभिमुखंकेतुं
धूम्रपुष्पाक्षतैः ॥ ॐ केतुंकृण्वन्नकेतवेपेशोमर्याअपेशसे ॥ समुषद्भिरजायथाः ॥ भूर्भु॰ अंतर्वेदिसमुद्भव
जैमिनिसगोत्रकेतोइहाग॰ केत॰ केतुं॰ ॥ अथाधिदेवताः ॥ ॐ त्र्यंबकंयजामहेसुगंधिंपुष्टिवर्धनं ॥ उ
र्वारुकमिवबंधनान्मृत्योर्मुक्षीयमामृतात् ॥ भूर्भु॰ ईश्वरइहागच्छइहातिष्ठसूर्यदक्षिणपार्श्वेईश्वरायनमःई
श्वरंआवाहयामि ॥ ॐ गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवु
षीसहस्राक्षरापरमेव्योमन् ॥ भूर्भु॰ उमेइहा॰ सोमदक्षिण॰ उमायैन॰ उमांआ॰ ॥ ॐ यदक्रंदःप्रथमंजा
यमानउद्यन्त्समुद्रादुतवापुरीषात्॥श्येनस्यपक्षाहरिणस्यबाहूउपस्तुत्यंमहिजातंतेअर्वन्॥भूर्भु॰ स्कंदइहा॰ ॥
भौमदक्षिणपार्श्वेस्कंदा॰ स्कंदंआ॰॥ ॐ विष्णोरराटमसिविष्णोःपृष्ठमसिविष्णोश्नप्त्रेस्थोविष्णोस्यूरसिवि
ष्णोर्ध्रुवमसिवैष्णवमसिविष्णवेत्वा॥भूर्भु॰ नारायणइहा॰ बुधदक्षिणपार्श्वेनाराय॰ नारा॰ ॥ॐब्रह्मादेवानांपद
वीःकवीनामृषिर्विप्राणांमहिषोमृगाणां ॥श्येनोगृध्राणां स्वधितिर्वनानां सोमःपवित्रमत्येतिरेभन्॥भूर्भु॰

ब्रह्मन्इहाग ॰ बृहस्पतिदक्षिणपार्श्वेब्रह्मणे॰ ॥ ब्रह्माणंआ॰ ॥ ॐसजोषाइंद्रसगणोमरुद्भिःसोमंपिबवृत्र
हन्च्छूरविद्वान् ॥जहिशत्रूँ२रपमृधोनुदस्वाथाभयंकृणुहिविश्वतोनः॥भूर्भु ॰ इंद्रइ ॰ शुक्रदक्षिणपार्श्वेइंद्राय॰
इंद्रंआ ॰ ॐ इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृभिःसंविदानः॥आत्वामंत्राःकविशस्तावहंत्वेनाराजन्हवि
षामा दयस्व॥भूर्भु ॰ यमइहा॰ ॥शनिदक्षिणपार्श्वेयमायन॰ यमंआ ॰ ॐकार्षिरस्यपापांमृध्र ँ२ समुद्रस्यवोक्षि
त्याउन्नये ॥ यमंग्नेपृत्सुमर्त्यमावोवाजेषुयंजुनाः ॥ भूर्भु॰ काल इहा ॰ राहुदक्षिणपार्श्वेकालायनमःकालं
आ॰ ॥ॐ चित्रावसोःस्वस्तितेपारमंशीयंधानास्त्वाशतं ँ२ हिमायुमंतःसमिंधीमहिवयस्वतोवयस्कृतंयशस्वंतो
यशस्कृत ँ२ सुवीरासोअदाभ्यं॥अग्नेसपत्नदंभनंवर्षिष्ठेअधिनाके॥ भूर्भु॰ चित्रगुप्तइहा॰ राहुदक्षिणपार्श्वेचि
त्रगुप्ता॰ चित्रगुप्तंआ॰ ॥ अथप्रत्यधिदेवताः ॥ ॐ अग्निंदूतंवृणीमहेहोतारंविश्ववेदसं॥अस्ययज्ञस्यसुक्रतुं॥
भूर्भु॰ अग्नेइहा ॰ सूर्यवामपार्श्वेअग्नये॰ अग्निंआ॰ ॥ ॐ अप्सुमेसोमोअब्रवीदंतर्विश्वानिभेषजा ॥ अग्निं
चविश्वशंभुवमापश्चविश्वभेषजीः ॥ भूर्भु॰ आपःइहा॰ सोमवामपार्श्वेअद्भ्योन॰ अपःआवा॰ ॥ ॐ स्योना
पृथिविभवानृक्षरानिवेशनी ॥ यच्छानःशर्मसप्रथाः ॥ भूर्भु॰ भूमेइहा॰ भौमवामपार्श्वेभूम्यैनमःभूमिं
आ॰ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपा ँ२ सुरे ॥ भूर्भु॰ विष्णोइहा॰ बुधवामपार्श्वे

विष्णवेन॰विष्णुंआ॰ ॥ ॐ इंद्रंवोविश्वतस्परिहवामहेजनेभ्यः ॥ अस्माकमस्तुकेवलः ॥ भूर्भु॰इंद्रइ
हा॰बृहस्पतिवामपार्श्वेइंद्राय॰इंद्रं॰ ॥ ॐ इंद्राणीमासुनारिषुसुपत्नीमहमश्रवं ॥ नह्यस्याअपरंचनजर
सामरंतेपतिः॥ भूर्भु॰इंद्राणिइहाग॰शुक्रवामपार्श्वेइंद्राण्यै॰इंद्राणींआ॰ ॥ ॐ प्रजापतेनत्वदेतान्ययोवि
श्वाजातानिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवय ँ स्यामपतयोरयीणां ॥ भूर्भु॰प्रजापतेइहा
ग॰शनिवामपार्श्वेप्रजापतये॰प्रजापतिं॰ ॥ ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुनः ॥ पितरंचप्रय
न्त्सुवः ॥ भूर्भु॰सर्पाःइहागच्छत॰राहुवामपार्श्वेसर्पेभ्योन॰सर्पान् ॥ ॐ ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसी
मतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविवः ॥ भूर्भु॰ब्रह्मन्इहागच्छ॰के
तुवामपार्श्वेब्रह्मणेन॰ब्रह्माणंआ॰ ॥ अथक्रतुसंरक्षकदेवताः ॥ ॐ गणानांत्वागणपति ँ हवामहे
कविंकवीनामुपमश्रवस्तमं ॥ ज्येष्ठराजंब्रह्मणांब्रह्मणस्पतआनःशृण्वन्नूतिभिःसीदसादनं ॥ भूर्भु॰गणपते
इहाग॰गणपतये॰गणपतिंआ॰ ॥ ॐ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः ॥ सनःपर्षदति
दुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ भूर्भु॰दुर्गायैनमःदुर्गाआवा॰ ॥ ॐ वायोशत ँ हरीणायुवस्वपो

ष्यांणां ॥ उतवांतेसहस्त्रिणोरथआयातुपाजसा ॥ भूर्भु० वायवे० वायुंआ०॥ॐ घृतंघृतपावानःपिबतवसां
वसापावानःपिबतांतरिक्षस्यहविरसिस्वाहात्वांतरिक्षायादिशःप्रदिशआदिशोविदिशउद्दिशःस्वाहांदिग्भ्योन
मोदिग्भ्यः।भूर्भु०आ।काशाय० आकाशं०।ॐयावांकशामधुमत्याश्विंनासूनृतावती॥तयायज्ञंमिमिक्षतं॥भूर्भु०
अश्विभ्यांनमःअश्विनौआवा० ॥ ॐ क्षेत्रस्यपतिनावय ँ हितेनेवजयामासि ॥ गामश्वंपोषयित्वासनोमृ
डातीदृशे ॥ भूर्भु०क्षेत्रपालायनमः क्षेत्रपालंआ० ॥ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्त्स्वावेशोअनमीवोभ
वानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनएधिद्विपदेशंचतुष्पदे ॥ भूर्भु० वास्तोष्पतयेन० वास्तोष्पतिं० ॥ ततः
अष्टौलोकपालान् ॥ ॐ त्रातारमिंद्रमवितारमिंद्र ँ हवेहवेसुहव ँ शूरमिंद्रं ॥ हुवेनुशक्रंपुरुहूतमिंद्र ँ स्व
स्तिनोमघवाधात्विंद्रः ॥ भूर्भु० इंद्रइहा० पूर्वस्यांइंद्राय० इंद्रंआ० ॥ ॐ अग्नेनयसुपथारायेअस्मान्विश्वा
निदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम ॥ भूर्भु० अग्नेइहा० आग्नेयांअ
ग्नये० अग्निंआ० ॥ ॐ सुगंनःपंथामभयंकरोतुयस्मिन्नक्षत्रेयमएतिराजा ॥ यस्मिन्नेनमभ्यषिंचंतदेवास्तदं
स्यचित्र ँ हाविषायजामः ॥ भूर्भु० यमइहा० दक्षिणेयमायन० यमंआ० ॥ ॐ असुन्वंतमयजमानामिच्छ
स्तेनस्येत्यांतस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु॥ भूर्भु० निर्ऋतेइहा०

नैर्ऋत्यांनिर्ऋतये॰ निर्ऋतिंआ॰ ॥ ॐ तत्त्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेड
मानोवरुणेहबोध्युरुश ँ समानआयुःप्रमोषीः ॥ भूर्भु॰ वरुणइहा॰ पश्चिमेवरुणाय॰ वरुणंआ॰ ॥ ॐवा
योशत ँ हरिणांयुवस्वपोष्याणां ॥ उतवांतेसहस्रिणोरथआयातुपाजसा ॥ भूर्भु॰वायोइहा॰ वायव्यांवा
यवे॰वायुंआ॰ ॥ ॐ वय ँ सोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावंतोअशीमहि ॥ भूर्भु॰ सोमइहा॰ उ
त्तरेसोमा॰ सोमंआ॰ ॥ ॐ अभित्वादेवसवितरीशानंवार्याणां ॥ सदावन्भागमीमहे ॥ भूर्भु॰ईशानइ
हा॰ ईशान्यांईशाना॰ईशानंआ॰ ॥ ततःग्रहादीशान्यांमहीद्यौरितिमंत्रेणकलशंसंस्थाप्यआवाहितदेवताः
षोडशोपचारैःपूजयेत् ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोसितदाकुंभविष्णुनाविधृतःस्वयं ॥
त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासि
विष्णुस्त्वं चप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतःकामफलप्र
दाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ सांनिध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ इतिप्रार्थ्य ॥ ततः
ग्रहान्नैर्ऋत्येस्थंडिलेउत्खननादिभूसंस्कारंविधाय ॥ सयथा ॥ ग्रहयज्ञहोमंकर्त्तुंस्थंडिलादिसकलंकर्मकरि
ष्यइतिसंकल्प्य ॥ गोमयोपलेपादिवरदनामानमग्निंप्रतिष्ठाप्य ॥ ततोन्वाधानं ॥ अत्रधएहीत्यादिन्या
त्त्यंतमुक्त्वात्रप्रधानं ॥ आदित्यंसोमंभौमंबुधंबृहस्पतिंशुक्रंशनैश्चरंराहुंकेतुं ॥ एताःप्रधानदेवताःअर्कादि

यथालाभसमिच्चर्वाज्यद्रव्यैः अष्टाविंशतिसंख्याकाभिः आहुतिभिः पुनरत्रप्रधानं ॥ ईश्वरंउमांस्कंदंनारायणं ब्रह्माणंइंद्रंयमंकालंचित्रगुप्तं ॥ अग्निअपःभूमिंविष्णुंइंद्रंइंद्राणींप्रजापतिंसर्पान्ब्रह्माणंएताःअधिदेवताःप्रत्यधिदेवतासहिताश्चैतैरेवद्रव्यैः ॥ अष्टाष्टसंख्याकाभिःआहुतिभिः ॥ पुनरत्रप्रधानं ॥ गणपतिंदुर्गांवायुं आकाशंअश्विनौक्षेत्रपालंवास्तोष्पतिंइंद्रंअग्निंयमंनिर्ऋतिंवरुणंवायुंसोमंईशानं एताःक्रतुसाद्गुण्यकरदेवताः अष्टौलोकपालांश्चैतैरेवद्रव्यैःचतुश्चतुःसंख्याकाभिःआहुतिभिर्यक्ष्ये ॥ अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वा ॥ इमानिउपकल्पितानिहवनीयद्रव्याणियायायक्ष्यमाणादेवताः ताभ्यस्ताभ्यःमयापरित्यक्तानिनमम ॥ यथादैवतमस्तु ॥ अथप्रधानहोमः ॥ इमंमेवरुणेत्यादिहोमशेषंसमापयेत् ॥ अथपूर्वोच्चरितवर्तमा० स्यर्थमयाकृतस्यआचार्यद्वाराग्रहयज्ञकर्मणःसांगतासिध्यर्थममक्षेमायुःसिध्यर्थंच इंद्रादिअष्टौलोकपालेभ्यःआदित्यादिनवग्रहदेवताभ्यःगणपत्यादिक्रतुसाद्गुण्यकरदेवताभ्यश्चसार्वभौत्तिकबलिप्रदानंकरिष्ये ॥ ॐ त्रातारमिंद्रं० भूर्भु० इंद्राय० सर्वोपचारार्थेगंधाक्षतान्समर्पयामि ॥ इंद्रायसांगायसपरिवारायसायुधायसशक्तिकायइमंसदीपमाषभक्तबलिंसमर्पयामि ॥ भोइंद्रदिशंरक्षबलिंभक्षममसकुटुंबस्यसपरिवारस्यआयुःकर्ताक्षेमकर्ताशांतिकर्तापुष्टिकर्तातुष्टिकर्तावरदोभव ॥ अनेनबलिदानेनइंद्रःप्रीयतां ॥ ॐ अग्नेनयसुपथाराये अस्मान्विश्वानि० भूर्भु० अग्नये० सर्वो० गंधा० अग्नयेसांगा० भोअग्नेदिशं० अनेनबलिदा० ॥

ॐ इमंयंमप्रस्तर॰ भूर्भु॰ यमायन॰ यमायसां॰ भोयमदिशंर॰ यमःप्रीयतां ॥ ॐ असुन्वंतमयंज॰ भूर्भु॰
निर्ऋतयेन॰ निर्ऋतयेसांगा॰ भोनिर्ऋतेदिशंरक्ष॰ निर्ऋतिःप्रीयतां ॥ ॐ तत्त्वांयामिब्रह्मणा॰ भूर्भु॰ वरुणा
यन॰ वरुणायसांगायस॰ भोवरुणदिशंरक्ष॰ अनेनबलि॰ वरुणःप्रीयतां ॥ ॐ वायोशत ॅ ह॰ भूर्भु॰ वाय
वे॰ वायवेसांगा॰ भोवायोदिशंरक्षब॰ वायुःप्रीयतां ॥ॐवय ॅ सोमव्रते॰ भूर्भु॰ सोमाय॰ सोमायसांगा॰ भो
सोमदिशंर॰ सोमःप्रीयतां ॥ ॐअभित्वांदेवस॰ भूर्भु॰ ईशानायसां॰ भोईशानदिशंरक्ष॰ ईशानःप्रीयतां ॥

ॐआसत्येनरजं॰ भूर्भु॰ सूर्यायनमःसर्वोप॰ सूर्यायसांगायसपरिवारायसायुधायसशक्तिकायईश्वराग्निरूपा
धिदेवताप्रत्यधिदेवतासहितायइमंसदीपमा॰ भोसूर्यअमुंबलिंगृहाणममसकुटुं॰ अनेनबलिदानेनसूर्यःप्रीय
तां ॥ ॐआप्यांयस्वसमेंतुते॰ भूर्भु॰ सोमायसां॰ उमाब्रूपाधिदेवताप्रत्याधि॰ भोसोमअमुंब॰ सोमःप्रीयतां ॥
ॐअग्निर्मूर्धादि॰ भूर्भु॰ अंगारकाय॰ स्कंदभूमिरूपाधिदेवताप्र॰ भोअंगारकअमुंब॰ अंगारकःप्रीयतां ॥ ॐ
उद्बुध्यस्वाग्ने॰ भूर्भु॰ बुधायसांगाय॰ नारायणविष्णुरूपाधिदेवताप्र॰ भोबुधअमुंबलिंगृ॰ बुधःप्रीयतां ॥ ॐ
बृहस्पते॰ भूर्भु॰ बृहस्पतयेसां॰ ब्रह्मेंद्ररूपाधिदेवताप्र॰ भोबृहस्पतेअमुंबलिं॰ बृहस्पतिःप्रीयतां ॥ ॐशुक्रं
तेअन्य॰ भूर्भु॰ शुक्रायसांगा॰ इंद्रेंद्राणिरूपाधिदेवताप्रत्य॰ भोशुक्रअमुंबलिं॰ शुक्रःप्रीयतां ॥ ॐशंनोदेवी॰
भूर्भु॰ शनैश्चरायसां॰ यमप्रजापतिरूपाधिदेवताप्रत्य॰ भोशनैश्चरअमुंब॰ शनैश्चरःप्रीयतां ॥ ॐकयानश्चि

त्र॰ भूर्भु॰ राहवेसांगाय॰ कालसर्परूपाधिदेवताप्र॰ भोराहोअमुंब॰ राहुःप्रीयतां ॥ ॐकेतुंकृण्वन्न॰ भूर्भु॰ केतवेसांगाय॰ चित्रगुप्तब्रह्मरूपाधिदेवताप्र॰ केतुःप्रीयतां ॥ ॐगणानांत्वा॰ भूर्भु॰ गणपतयेसांगायसपरिवारायसायुधायसशक्तिकायइमंस॰ भोगणपतेअमुंब॰ गणपतिःप्रीयतां ॥ ॐजातवेदसे॰ भूर्भु॰ दुर्गायैन॰ सर्वोप॰ गंधाद्युप॰ दुर्गायैसांगायैसपरिवारायैसायुधायैसशक्तिकायैइमंसदी॰ भोदुर्गेअमुंबलिंभक्षदिशंरक्षममसकुटुंबस्यआयुःकर्त्रीक्षेमकर्त्रीशांतिकर्त्रीपुष्टिकर्त्रीतुष्टिकर्त्रीवरदाभव ॥ अनेनबलिदानेनदुर्गाप्रीयतां ॥ ॐ वायोशत ॰ भूर्भु॰ वायवेसांगाय॰ भोवायोअमुंब॰ वायुःप्रीयतां ॥ ॐ घृतंघृतपा॰ भूर्भु॰ आकाशाय॰ भोआकाश॰ आकाशःप्रीयतां ॥ ॐ यावांकशाम॰ भूर्भु॰ अश्विभ्यांनमःसर्वोपचारार्थे॰ अश्विभ्यांसांगाभ्यांसपरिवाराभ्यांसायुधाभ्यांसशक्तिकाभ्यांइमं॰ भोअश्विनौइहागच्छतंइहतिष्ठतंपूजांगृह्णीतंममसंमुखौसुप्रसन्नौवरदौभवतं ॥ अने॰ प्रीयेतां ॥ ॐ क्षेत्रस्यपतिना॰ भूर्भु॰ क्षेत्रपालाय॰ भोक्षेत्रपा॰ क्षेत्रपालःप्रीयतां ॥ ॐ वास्तोष्पतेप्रति॰ भूर्भु॰ वास्तोष्पतये॰ भोवास्तोष्पतेअ॰ वास्तोष्पतिःप्रीयतां ॥ अद्येत्यादि॰ मयाकृ॰ ग्रहयज्ञकर्मणःसांगतासिद्ध्यर्थंसार्वभौक्तिकबलिप्रदानंक॰ ॐक्षेत्रस्यपतिनेतिमंत्रेणबलौक्षेत्रपालमावाह्यततःपूर्वादिक्रमेणचरक्यादिआवाहयेत् ॥ चरक्यैनमःचरकींआवा॰ विदार्यैनमःविदारींआवा॰ पूतनायै॰ पूतनांआ॰ पापराक्षस्यैन॰ पापराक्षसींआ॰ भूतजृंभायै॰ भूतजृंभांआ॰ विरूपाक्षाय॰ विरूपाक्षंआ॰

धूम्रजिव्हाय॰ धूम्रजिह्वंआ॰ महोरगाय॰ महोरगंआ॰ सुप्रतिष्ठितमस्तु ॥ क्षेत्रपालाद्यावाहितदे॰ षोडशोप
चारैः पूजयेत् ॥ ॐ क्षेत्रस्यपतिनाव॰ भूर्भुव॰ क्षेत्रपालाद्यावा॰ सर्वोपचारार्थेगंधाद्युपचा॰ क्षेत्रपालायसांगा
यस॰ भूतप्रेतपिशाचब्रह्मराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुतायइमंसदीपमाष॰ भोक्षेत्रपालइमं॰
अनेनबलिदानेनक्षेत्रपालःप्रीयतां ॥ प्रार्थयेत् ॥बलिंगृह्णंत्विमेदेवाआदित्यावसवस्तथा ॥ मरुतश्चाश्वि
नौरुद्राःसुपर्णाःपन्नगाग्रहाः ॥ असुरायातुधानाश्चपिशाचोरगराक्षसाः ॥ शाकिन्योयक्षवेतालायोगिन्यःपू
तनाःशिवाः ॥ जृंभकासिद्धगंधर्वानागाविद्याधरास्तथा ॥ दिक्पालालोकपालाश्चयेचविघ्नविनायकाः ॥
जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः ॥ माविघ्नंमाचमेपापंमासंतुपरिपंथिनः ॥ सौम्याभवंतुतृप्ताश्चदेवा
भूतगणास्तथा ॥ चरकीचविदारीचपूतनापापराक्षसी ॥ भूतजृंभोविरूपाक्षोधूम्रजिह्वोमहोरगः ॥ एतेर
क्षंतुभवनंनगरंग्राममेवच ॥ येकेचइहयज्ञेस्मिन्नागताबलिकांक्षिणः ॥ तेभ्योबलिंप्रयच्छामिनमस्कृत्वापु
नःपुनः ॥ भूतानियानीहवसंतितानिबलिंगृहीत्वाविधिवत्प्रयुक्तं ॥ अन्यत्रवासंपरिकल्पयंतुक्षमंतुतान्यत्र
नमोस्तुतेभ्यः ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वशर्वेभ्योनमस्तेअस्तुरुद्ररूपेभ्यः ॥ उत्ति
ष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे ॥ उपप्रयंतुमरुतःसुदानवइंद्रप्राशूर्भवासचा ॥ प्रक्षालितपादपाणिः ॥ आच
म्य ॥ द्वादशाष्टचतुर्गृहीतेनवाज्येनपूर्णाहुतिंजुहुयात् ॥ मयाकृतस्यआचार्यद्वाराग्रहयज्ञहवनकर्मणःसांग

तासित्ध्यर्थसंपूर्णफलावाप्तयेपूर्णाहुतिंहोष्ये ॥ आचार्यः ॥ ॐ सप्ततेअग्नेसमिधःसप्तजिह्वाःसप्तर्षयःसप्तधा मप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा ॥ सप्तवतेअग्नयइदं • ततःआचार्याद यः ॥ सपत्नीकंयजमानंग्रहकलशोदकेनाभिषिंचेयुः॥ग्रहांश्चउत्तरपूजांविधायआचार्यायधेनुंदत्वाअग्निपू जनंकृत्वामानस्तोकेतिविभूतिंधृत्वागच्छगच्छेतिविसृज्यब्राह्मणान्भोजयित्वाभूयसींदत्वायस्यस्मृत्येत्युक्त्वा विष्णुंस्मरेत् ॥ ॥ इतिग्रहयज्ञःसमाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०२ ॥ ॥ अथ वास्तुशांतिप्रयोगः ॥

श्रीगणेशायनमः ॥ ॥ योगेश्वरींनमस्कृत्यगणेशंगिरिजांशिवं॥ब्रुवेहिरण्यकेशीयवास्तुशांतिविनिर्णयं॥ तत्रगृह्यं ॥ शालांकारयिष्यन्नुदगयनआपूर्यमाणपक्षेत्रिपुचोत्तरेष्वग्निमुपसमाधायेति ॥ नारदः ॥ सौ म्यफाल्गुनवैशाखमाघश्रावणकार्तिकाः ॥ मासास्युर्गृहनिर्माणेपुत्रारोग्यधनप्रदाः ॥ सौम्योमार्गशी र्षः ॥ बादरायणः ॥ वैशाखेफाल्गुनेपौषेश्रावणेमार्गशीर्षके॥सूत्रारंभःशिलान्यासःस्तंभारंभःप्रशस्यते ॥ ज्योतिर्निबंधे ॥ त्र्युत्तराम्रृगरोहिण्यःपुष्यमैत्रकरत्रयं ॥ धनिष्ठाद्वितयंपौष्णंगृहारंभेप्रशस्यते ॥ करत्रयंहस्त चित्रास्वातयः ॥ पौष्णंरेवती ॥ मात्स्ये ॥अश्विनीरोहिणीमूलमुत्तरात्रयमैंदवं ॥ स्वातीहस्तोनुराधाचगृहारं भेप्रशस्यते ॥ ऐंदवंम्रृगशीर्षं ॥ शेषंस्पष्टं ॥ वारादिकमुक्तंनारदेन ॥ आदित्यभौमवर्जंतुसर्वेवाराःशुभाव

हाः ॥ चंद्रादित्यबलंलब्ध्वालग्नेशुभानिरीक्षिते ॥ स्तंभोच्छ्रायादिकर्तव्यमन्यत्तुपरिवर्जयेत् ॥ मात्स्ये॥ व
ज्रव्याघातशूलेषुव्यतीपातातिगंडयोः ॥ विष्कंभगंडपरिघविष्टियोगेनकारयेत् ॥ वराहः ॥ दक्षिणापूर्वको
णेतुकृत्वापूजांशिलांन्यसेत् ॥ ततःप्रदक्षिणेनैवस्तंभांश्चैसमुच्छ्रयेत् ॥ प्रासादेष्वेवमेवस्यात्कूपवापीषुचैव
हि ॥ नारदः ॥ स्नानागारंदिशिप्राच्यामाग्नेय्यांपावकालयः ॥ याम्यायांशयनंगेहंनैर्ऋत्यांशस्त्रमंदिरं ॥
प्रतीच्यांभोजनगृहंवायव्यांपशुमंदिरं ॥ भांडागारंतूत्तरस्यामीशान्यांदेवतागृहं ॥ वासिष्ठः ॥ स्वगृहात्प
श्चिमेभागेपितृस्वाग्रजमंदिरं॥अत्रस्वशब्देनपितुःस्वकीयाः॥ अग्रजोज्येष्ठभ्रातेत्यर्थः ॥ गर्गः ॥ परकोणैः
परद्वारैःपरस्तंभैःपरद्रुमैः ॥ परवृक्षादिभिश्चैवहतंद्वारंनिरर्थकं ॥ हतंविद्धमित्यर्थः ॥ अत्रद्रुमशब्देनक्षुद्रवृ
क्षाः ॥ वृक्षशब्देनआम्रादयस्थूलवृक्षाग्राह्याः ॥गृहपादागृहस्तंभाःसमाःकार्यास्तुनासमाः ॥ नात्युच्छ्रितं
नातिनीचंकुड्योत्सेधंयथारुचि॥भित्तिःपक्वेष्टकाभिर्वादारुणाप्यथवामृद॥ कार्याचित्रपटैर्वापितृणैःपर्णैश्चन
क्वचित् ॥ राजतोभयमत्युच्चैरतिनीचैस्तुचोरतः ॥ विनाशश्चातिविस्तीर्णेसंवृतेचातिचक्रुधेति ॥ इतिशाला
करणपरिभाषा ॥ अथवास्तुशांतिपरिभाषा ॥ गृह्ये ॥ अनूराधैर्वास्तुशमनंनिशायामंतरागारेऽग्निमुपसमाधाये
ति ॥ मात्स्ये ॥ वास्तुपूजामकृत्वातुयोविशेन्नवमंदिरं ॥ रोगान्नानाविधान्क्लेशानश्नुतेसर्वसंकटान् ॥ ना
रदोपि ॥ अकपाटमनाछन्नमदत्तबलिभोजनं ॥ गृहन्नप्रविशेद्धीमानापदामाकरोहितत् ॥ नि

१ कूप.

र्गणेमंदिराणांचप्रवेशोत्रिविधेपिवा ॥ वास्तुपूजाप्रकर्तव्यातस्मात्तांकथयाम्यतः ॥ गृहमध्येहस्तमात्रंस मंतात्तंडुलोपरि ॥ एकाशीतिपदंकार्यंकुंकुमादिसुशोभनं ॥ मात्स्ये ॥ एकाशीतिपदंकृत्वारेणुभिःकनके नतु ॥ पश्चात्पिष्टेनलिंपेतसूत्रेणालोड्यसर्वतः ॥ शांतायशोवतीकांताविशालाप्राणवाहिनी ॥ सतीचसु मतीनंदासुभद्रासुरथादश ॥ हिरण्यासुव्रतालक्ष्मीर्विभूतिर्विमलाप्रिया ॥ जयाज्वालाविशोकाचइडेतिदश नामभिः ॥ दशपूर्वायतारेखादशचैवोत्तरायताः ॥ सर्ववास्तुविभागेषुविज्ञेयानवकानव ॥ पदस्थान्पू जयेद्देवांस्त्रिंशत्पंचदशैवतु ॥ द्वात्रिंशद्बाह्यतःपूज्याःपूज्याश्चातस्त्रयोदश ॥ मध्येनवपदश्चैकश्चत्वारःस्त्रि पदास्मृताः ॥ विंशतिस्त्वेकपदकास्तावंतोद्विपदास्मृताः ॥ नामान्यपिप्रवक्ष्यामिस्थानानिचनिबोधत ॥ ईशानकोणादिसुरान्पूजयेत्क्रमशोनव॥शिखीचैवाथपर्जन्योजयंतःकुलिशायुधः ॥ सूर्यसत्यौभृशश्चैवआका शोवायुरेवच ॥ पूषाचवितथश्चैवगृहक्षतयमावुभौ ॥ गंधर्वोभृंगराजश्चमृगःपितृगणस्तथा ॥ दौवारिकोथ सुग्रीवःपुष्पदंतोजलाधिपः ॥ असुरःशोषपापौचरोगोहिर्मुख्यएवच ॥ भल्लाटःसोमसर्पौचअदितिश्चदिति स्तथा॥बहिर्द्वात्रिंशदेतेतुतदंतश्चतुरःशृणु ॥ईशानादिचतुष्कोणसंस्थितान्पूजयेद्बुधः ॥ आपश्चैवाथसावि त्रोजयोरुद्रस्तथैवच ॥ मध्येनवपदेब्रह्मातस्यचाष्टौसमीपगाः ॥ अर्यमासविताचैवविवस्वान्विबुधाधिपः ॥ मित्रोथराजयक्ष्माचतथापृथ्वीधरःस्मृतः ॥ अष्टमश्चापवत्सस्तुपरितोब्रह्मणस्मृताः ॥ चरकींचविदारींचपू

१ ग्रहयज्ञपुरःसरं. २ तिलैस्तुल्यं.

 तनांपापराक्षसीं ॥ ईशानादिचतुष्कोणक्रमेणस्थापयेत्ततः ॥ प्रागादितश्चतुर्दिक्षुस्कंदमर्यमणंतथा ॥ जृंभ 
कंपिलिपिच्छंचस्थापयेत्पूजयेत्ततः ॥ इंद्रादीन्लोकपालांश्चस्वस्वदिक्षुचविन्यसेत् ॥ ईशान्यांकलशंस्था
 प्यवरुणंतत्रपूजयेत् ॥ होमश्चिमेखलेकार्यःकुंडेहस्तप्रमाणके ॥ पायसाज्यातिलैश्चैवसमिद्भिःक्षीरवृक्षजैः ॥
पालाशैःखादिरैःश्चापामार्गोदुंबरसंभवैः ॥कुशदूर्वाभवैर्वापिमधुसर्पिःसमन्वितैः॥कार्यस्तुपंचभिर्बिल्वैर्बिल्व
बीजैरथापिवा॥होमांतेभक्ष्यभोज्यैस्तुवास्तुदेशेबलिंहरेत्॥ततःसर्वौषधिस्नानंयजमानस्यकारयेत् ॥ द्विजांस्तु
पूजयेद्भक्त्यायेचान्येगृहमागताः ॥ पुरवेश्मप्रवेशेचसर्वदोषोपशांतये ॥ वास्तूपशमनंकृत्वाततःसूत्रेणवेष्टये
त् ॥ राक्षोघ्नपावमानेनसूक्तेनभवनादिकं ॥ नृत्यंमंगलवाद्यंचकुर्याद्ब्राह्मणभोजनं ॥ अनेनविधिनायस्तुप्र
तिसंवत्सरंबुधः ॥ गृहेवायतनेकुर्यान्नसदुःखमवाप्नुयात् ॥ मृत्पेटिकांस्वर्णरत्नधान्यशैवालसंयुतां ॥ गृह
मध्येहस्तमात्रंगर्तंन्यासायकल्पयेत् ॥ वास्तुज्ञोवास्तुमंत्रेणगंधपुष्पाक्षतादिभिः ॥ प्रणवेनार्चयेद्वापिअथवा
स्वस्वनामभिः ॥ शुक्लवस्त्रयुगंदद्यात्धूपदीपफलैःसह ॥ अपूपैर्भूरिनैवेद्यैर्भूरिवाद्यैःसमर्पयेत् ॥ तांबूलंचत
तोदद्याद्देवेभ्यश्चपृथक्पृथक् ॥ दत्वापुष्पांजलिंकर्ताप्रार्थयेद्वास्तुपूरुषं ॥ वास्तुमूर्तेनमस्तेस्तुभूशय्याभिरत
प्रभो॥मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥सशैलसागरांपृथ्वींयथावहसिमूर्धनि ॥ तथामांवहकल्याणसंप 
त्संतातिभिःसह ॥ इतिप्रार्थ्यततोदद्याद्दक्षिणामर्चकायच ॥ विप्रेभ्योभोजनंदद्यात्स्वयंभुंजीतबंधुभिः ॥ ए

१ यवैःकृष्णातिलैश्चैव.

वंयःकुरुतेसम्यग्वास्तुपूजांप्रयत्नतः ॥ आरोग्यंपुत्रपौत्रादिधनंधान्यंलभेन्नरः ॥ इतिवास्तुशांतिपरिभाषा ॥ अथप्रवेशपरिभाषा ॥ नारदः॥प्रवेशोमध्यमोज्ञेयःसौम्यकार्तिकमासयोः ॥ माघफाल्गुनवैशाखज्येष्ठमासे षुशोभनः ॥ रत्नकोशे ॥ पुष्येधनिष्ठामृगवारुणेषुस्वायंभुवर्क्षेत्रिषुचोत्तरासु ॥ वारुणंशततारका ॥ स्वायं भुवंआर्द्रानक्षत्रं ॥ अक्षीणचंद्रेशुभदोनृपस्यतिथावरिक्तौस्वगृहप्रवेशः ॥ वसिष्ठः ॥ कृत्वाश्रुक्रंवामतःपृष्ठ तोर्कविप्रान्पूज्यानग्रतःपूर्णकुंभं ॥ रम्यंहर्म्यंतोरणस्त्राग्वितानैःस्त्रीभिस्स्रग्वीगीतवाद्यैर्विशेच्च ॥ नारदोपि॥गृह्यो क्तहोमविधिनाबलिकर्मकुर्यात्प्रासादवास्तुशमनेचविधिर्यउक्तः ॥ संतर्पयेद्द्विजवरानथभक्ष्यभोज्यैःशुक्लांबर स्वभवनंप्रविशेत्सुरूपं ॥ कृत्वाग्रतोद्विजवरानथपूर्णकुंभंदध्यक्षताम्रदलपुष्पफलोपशोभं ॥ दत्वाहिरण्य वसनानितथाद्विजेभ्योमांगल्यशांतिनिलयंस्वगृहंविशेच्च ॥ विस्तरस्तुशांतिसारादिभ्योवगंतव्यः ॥ एवंपरि भाषोक्तरीत्यापूर्वंस्वगृह्योक्तशालाकरणंवास्तुशांतिंचविधायततःपुराणस्मृत्युक्तवास्तुशांतिंकृत्वा ॥ पश्चात्स्व गृह्योक्तविधिनावास्तुप्रवेशंकुर्यात् ॥ इतिसमुच्चयविधिःकर्तव्यः ॥ गृह्योक्तहोमविधिनेतिपूर्वोक्तवाक्यव्या ख्यानावसरे ॥ अत्रपौराणवास्तुशांतेःस्वगृह्योक्तवास्तुशांत्यासमुच्चयोविधीयतइतिशांतिसारादिनिबंधेषूक्त त्वात् ॥ केचित्तंत्रेणानुष्ठीयंतेतन्न ॥ तंत्रसमुच्चययोःस्वरूपाविरोधात् ॥ तंत्रंनामबहूनांसजातीयकर्मणांयुग पदनुष्ठानंतत्रअंगानांसकृदावृत्तिःप्रधानानांपृथक्पृथगनुष्ठानमिति ॥ समुच्चयोनामएकोद्देश्यकानेककर्मणामे ककालेपृथक्पृथक्करणमिति ॥ असतिविभवेकेवलागृह्योक्ताशांतिरेवकर्तव्या ॥ ॥ इतिपरिभाषा ॥

॥ अथप्रयोगः ॥ ॥ प्रागुक्तदिनेगृहप्रवेशदिनेवापूर्वाह्णेयजमानःसपत्नीकःनवजलपल्लवोपेतंसफलंकलशंपत्न्यंजलिनाग्राहयित्वा ॥ स्वयमौपासनाग्निंपचनाग्निंवागृहीत्वाब्राह्मणान्वितस्तूर्यघोषेणसहवास्तुंप्रप्यपादौप्रक्षाल्याचम्यप्रधानगृहमध्येधान्योपरितंकलशंऔपासनाग्न्युखां चसंस्थाप्यब्राह्मणैःसहशुभासनेप्राङ्मुखउपविश्यदेशकालकीर्तनांतेकरिष्यमाणशालाकरणगृह्योक्तवास्तुशमनमात्स्योक्तवास्तुशांत्यंगत्वेनगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ इतिसंकल्प्य ॥ तानिकृत्वा ॥ ततःशालाकरणं ॥ देशकालौसंकीर्त्यश्रीपरमेश्वरप्रीत्यर्थंशालाकरणहोमंकरिष्ये ॥ इतिसंकल्प्य ॥ औपासनाग्निमुपसमाधायेत्यादिसामान्यप्रधानांतंहुत्वा ॥ नास्त्यत्रवैशेषिकहोमः ॥ इमंमेवरुणेत्यादित्रिवदन्नहोमंपुण्याहवाचनांतंकृत्वा ॥ अहतंवासःपरिधायाचम्य ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यामाददेभ्रिरसिनारिरसिपरिलिखितꣳरक्षःपरिलिखिताअरातयइदमहꣳरक्षसोग्रीवाअपिकृंतामियोस्मान्द्वेष्टियंचवयंद्विष्मइदमस्यग्रीवाअपिकृंतामिइतिसकृन्मंत्रमुक्त्वात्रिःप्रदक्षिणमवटंपरिलिखति ॥ एवंप्रत्यवटंयावद्भिरवटैःप्रयोजनंतावंतःखात्वा ॥ अवटसंबंधिपांसून्छालाभ्यंतरेप्रकीर्य ॥ उच्छ्रयणक्रमेणावटक्रमोज्ञेयः ॥ इहैवध्रुवांनिमिनोमिशालांक्षेमेतिष्ठतिघृतमुक्षमाणा ॥ तांत्वाशालेसुवीराःसर्ववीराअरिष्टवीराअनुसंचरेमेतिद्वारस्थूणयोर्दक्षिणास्थूणामुच्छ्रयति ॥ अवटेस्थापयतीत्यर्थः ॥ इहैवध्रुवाप्रतितिष्ठशालेअश्वाव

तीर्गोमतीसूनृवतीऊर्जस्वतीपयसापिन्वमानोच्छ्रयस्वमहतेसौभगायेत्युत्तरां ॥ आत्वाकुमारस्तरुणआव
त्सोजगतासह ॥ आत्वाहिरण्मयःकुंभआदध्नःकलशैरयंनिव ॥ इतिसम्यक्स्थापितेअभिमृशति ॥ प्रातिस्थू
णंमंत्रावृत्तिः ॥ एवमेवस्थूणराज्यौस्थूणापंक्तीवुच्छ्रयति ॥ एवमेवाभिमृशति ॥ प्रातिस्थूणंमंत्रावृत्तिःऋतेनस्थू
णात्वधिरोहवंशोर्ध्वोविराजन्नपसेधशत्रून् ॥ अथास्मभ्य ँ सहवीरा ँ रयिंदाः ॥ इतिस्थूणराज्योरुपरिमध्य
मंपृष्ठवंशमारोपयति ॥ मानःसपत्नःशरणस्योनादेवोदेवेभिर्विमितास्यग्रे ॥ तृणंवसानाःसुमनाअसित्व ँ शं
नएधिद्विपदेशंचतुष्पदे ॥ इतिसर्वतश्छंनामभिमृशति ॥ इतिशालाकरणप्रयोगः ॥ अथगृह्योक्तवास्तुशांतिः ॥
गृह्ये ॥ ततोनुराधैर्वास्तुशमनं ॥ निशायामंतरागारेग्निमुपसमाधायआचम्यप्राणानायम्यदेशकालौसंकीर्त्यम
मास्यवास्तोःशुभतासिद्धिद्वारावास्तुदेवताप्रीत्यर्थंवास्तुशमनहोमंकरिष्ये॥इतिसंकल्प्याग्निंध्यात्वासामित्रयमा
दायेत्यादिव्याहृत्यंतमुक्त्वावैशेषिकहोमेवास्तोष्पतिंत्रिराज्येनशचीपतिमाज्येनवास्तोष्पतिमाज्येनशचीपति
माज्येनअंगहोमेवरुणंद्विरित्यादिव्याहृतिपर्यंतंकृत्वाजुहोति ॥ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमी
वोभवानः ॥ यत्त्वेमहेप्रतितन्नोजुषस्वशंनएधिद्विपदेशंचतुष्पदेस्वाहा ॥ वास्तोष्पतयइदं ॥ ॐ वास्तोष्पते
शग्मयास ँ सदातेसक्षीमहिरण्वयागातुमत्या ॥ आवःक्षेमउतयोगेवरंनोयूयंपातस्वस्तिभिःसदानःस्वाहा ॥
वास्तोष्पतयइदंइतिद्वे ॥ ॐ वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिरश्वेभिरिंदो ॥ अजरासस्तेसख्येस्याम

 मपितेवंपुत्रान्प्रतिनोजुषस्वस्वाहा ॥ वास्तोष्पतयइदं० ॥ अपैतुमृत्युरमृतंनआगन्वैवस्वतोनोअभयंकृणो 
तु ॥ पर्णंवनस्पतेरिवाभिनःशीयता ँ रयिःसचतांनःशचीपतिःस्वाहा ॥ शचीपतयइदं ॥ परंमृत्योअनुपरे
 हिपंथांयस्तेस्वइतरोदेवयानात् ॥ वास्तोष्पतेशृण्वतेतेब्रवीमिमानःप्रजा ँ रीरिषोमोतवीरान्स्वाहा ॥ वास्तो
ष्पतयइदं॥ इदमूनुःश्रेयोवसानमागन्मयद्गोजिद्धनजिदश्वजिद्यत् ॥ पर्णंवनस्पतेरिवाभिनःशीयता ँ रयिःस
चतांनःशचीपतिःस्वाहा ॥ शचीपतयइदं॥ इतिषडाहुतीर्हुत्वा॥ अंगहोमादिचिवृदन्नहोमंपुण्याहवाचनांतंकु
र्यात् ॥इतिगृह्योक्तवास्तुशमनप्रयोगः॥अथमात्स्योक्तवास्तुशांतिः॥पुनर्देशकालौसंकीर्त्यश्रीपरमेश्वरप्रीतिद्वा
र:ममनूतनवास्तुकरण॥श्रितहीनाधिकांगसमवेधादिदुष्टायव्ययजन्यसर्वदोषशांत्यर्थंअस्यवास्तोःशुभतासि
द्धिद्वारापुष्टितुष्टिधनधान्यपुत्रपौत्राद्यभिवृद्ध्यर्थंचसग्रहमखांमात्स्योक्तांवास्तुशांतिंकरिष्ये॥तदंगंआचार्यादि
वरणंचकरिष्ये ॥ इतिसंकल्प्य ॥ वास्तुशांत्याख्येकर्मणिआचार्यत्वांवृणे॥इतिवृणुयात्पूजयेच्च ॥ आचार्य
स्तुयथास्वर्गेशक्रादीनांबृहस्पतिः ॥ तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत ॥ यथाचतुर्मुखोब्रह्मास्वर्गेलोके
पितामहः ॥ तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम ॥ अस्ययागस्यनिष्पत्तौभवंतोभ्यर्थितामया ॥ सुप्रस
न्नैश्चकर्त्तव्यंकर्मेदंविधिपूर्वकं ॥ इतिप्रार्थ्य ॥ततआचार्यःदेशकालौसंकीर्त्यअमुकगोत्रोत्पन्नेनअमुकशर्मणा 
यजमानेनवृतोहंविहितंकर्मकरिष्ये ॥ तदंगंगणपतिपूजनंशरीरशुद्ध्यर्थंपुरुषसूक्तपठनंसर्षपविकिरणादिक

रिष्ये ॥ गणपतिपूजनंकृत्वा ॥ पुरुषसूक्तंपठित्वा ॥ यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा ॥ स्थानंत्यक्त्वा तुतत्सर्वंयत्रस्थंतत्रगच्छतु ॥ अपक्रामंतुभूतानिपिशाचाःसर्वतोदिशं ॥ सर्वेषामवरोधेनशांतिकर्मसमारभे॥ भूतप्रेतपिशाचाद्याअपक्रामंतुराक्षसाः ॥ स्थानादस्माद्व्रजंत्वन्येस्वीकरोमिभुवंत्विमां ॥ इतिमंत्रत्रयेणसर्षपान्विकीर्य ॥ शुचीवइत्यृग्भिः ३ पंचगव्येनप्रोक्ष्यापोहिष्ठेत्यृग्भिःशुद्धाद्भिश्चप्रोक्ष्य ॥ ॐभद्रंकर्णेभिःशृणुयामदेवाः ॥ भद्रंपश्येमाक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवाँसस्तनूभिः ॥ व्यशेमदेवहितंयदायुः ॥ स्वस्तिनइंद्रोवृद्धश्रवाः ॥ स्वस्तिनःपूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योअरिष्टनेमिः ॥ स्वस्तिनोबृहस्पतिर्दधातु ॥ मंत्रद्वयंपठेत् ॥ ततोगृहमध्येयजमानहस्तैकमितंकुंडंचतुरस्रंचतुरंगुलोत्सेधंस्थंडिलंवाविधाय ॥ तत्पूर्वतस्तदीशान्यांचहस्तमितंवेदिद्वयंकृत्वा ॥ पूर्ववेद्यांईशानादिकोणेषु ॥ विशंतुभूतलेनागालोकपालाश्चसर्वशः ॥ अस्मिन्गृहेवतिष्ठंतुआयुर्बलकराःसदा ॥ इतिमंत्रावृत्त्याप्रतिकोणेशंकुंरोपयेत् ॥ शंकुपार्श्वेईशान्यादि ॥ अग्निभ्योप्यथसर्पेभ्योयेचान्येतत्समाश्रिताः ॥ तेभ्योबलिंप्रयच्छामिपुण्यमोदनमुत्तमं ॥ इतिमाषभक्तबलिंदद्यात् ॥ ततोवेद्युपरिकुंकुमादिनासुवर्णशलाकयाशांतायैनमः ॥ यशोवत्यैनमः॥ कांतायैनमः ॥ विशालायैनमः ॥ प्राणवाहिन्यै० सत्यै० सुमत्यै० नंदायै० सुभद्रायै० सुरथायै० एतैर्नामभिःपश्चादारभ्यप्रागग्रताउदक्संस्थाअंगुलद्वयांतरालादशरेखालिखित्वा ॥ हिरण्यायैनमः॥ सुव्रतायै० लक्ष्म्यै० विभूत्यै० विमला

ये० प्रियायै० जयायै० ज्वालायै० विशोकायै० इडायै० एतैर्नामभिः दक्षिणामारभ्योदगायताः प्राक्संस्थारेखाः
कल्पात्तत्रवास्तुमंडलेप्रतिमादौदेवताआवाहयेत् ॥ तद्यथा ॥ ईशानकोणपदेवास्तोःशिरसि ॥ शिखिनेनमः
शिखिनमावाहयामि ॥१ एवंसर्वत्र॥ तद्दक्षिणैकपदेतद्दक्षिणनेत्रेपर्जन्यायनमः ॥ पर्जन्यमावाहयामि ॥२ त
द्दक्षिणपदेतत्पश्चिमपदेचदक्षिणश्रोत्रेजयंताय० जयंतमा० ३ तद्दक्षिणपदद्वयेदक्षिणांसेकुलिशायुधाय० कु
लिशायुधमा० ४ तद्दक्षिणपदद्वयेदक्षिणबाहौसूर्याय० सूर्यमावा० ५ तद्दक्षिणपदद्वयेदक्षिणबाहावेवसत्या
य० सत्यमा० ६ तद्दक्षिणपदद्वयेदक्षिणकूर्परेभृशाय० भृशमा० ८ तद्दक्षिणैकपदेदक्षिणप्रबाहौआकाशा
य० आकाशमा० ८ तद्दक्षिणाग्नेयकोणपदेदक्षिणप्रबाहावेववायवेन० वायुमा० ९ तत्पश्चिमैकपदेदक्षिण
मणिबंधेपूष्णेनमः ॥ पूषणमा० १० तत्पश्चिमपदेतदुत्तरपदेचदक्षिणपार्श्वेवितथाय० वितथमा० ११ त
त्पश्चिमपदद्वयेदक्षिणपार्श्वएवगृहक्षताय० गृहक्षतमा० १२ तत्पश्चिमपदद्वयेदक्षिणोरौयमाय० यममा०
१३ तत्पश्चिमपदद्वयेदक्षिणजानौगंधर्वाय० गंधर्वमा० १४ तत्पश्चिमपदद्वयेदक्षिणजंघायांभृंगराजाय०
भृंगराजमा० १५ तत्पश्चिमोपरिस्थैकपदेदक्षिणस्फिचिमृगाय० मृगमा० १६ तत्पश्चिमेनैर्ऋत्यकोणपदे
पादयोः ॥ पितृभ्योन० पितृना० १७ तदुत्तरैकपदेवामस्फिचिदौवारिकाय० दौवारिकमा० १८ तदुत्तरप
देतत्प्राक्पदेचवामजंघायांसुग्रीवाय० सुग्रीवमा० १९ तदुत्तरपदद्वयेवामजानौपुष्पदंतायन० पुष्पदंतमा०
२० तदुत्तरपदद्वयेवामोरौजलाधिपाय० जलाधिपमा० २१ तदुत्तरपदद्वयेवामपार्श्वेअसुराय० असुरमा०

२२ तदुत्तरपदद्वयेवामपार्श्वेएवशोषाय • शोषमा• २३ तदुत्तरोपरिस्थैकपदेवाममणिबंधेपापाय • पापमा•
२४ तदुत्तरवायव्यकोणपदेवामप्रबाहौरोगाय • रोगमा• २५ तत्प्रागेकपदेवामप्रबाहावेवअहयेन • अहि
मा • २६ तत्प्राक्पदेतद्दक्षिणपदेचवामकूर्परेमुख्याय • मुख्यमा• २७ तत्प्राक्पदद्वयेवामबाहौभल्लाटाय•
भल्लाटमा • २८ तत्प्राक्पदद्वयेवामबाहावेवसोमाय • सोममा • २९ तत्प्राक्पदद्वयेवामांसेसर्पाय • सर्पमा•
३० तत्प्राक्पदद्वयेवामश्रोत्रेअदित्यैन • अदितिमा• ३१ तत्प्रागुपरिस्थैकपदेवामनेत्रेदित्यैन • दितिमा•
३२ तद्दक्षिणेशिखिपदाधःकोणपदेमुखेअद्भ्योन • अपआ• ३३ आग्नेयेवायुपदाधःकोणपदेदक्षिणहस्तेसा
वित्रायन • सावित्रमा• ३४ नैर्ऋत्येपितृपदाधःकोणपदेमेंढ्रेजयायन • जयमा• ३५ वायव्येरोगपदाधःकोण
पदेवामहस्तेरुद्राय • रुद्रमा • अपउपस्पृश्य• ३६ मध्यपदेष्वीशानकोणपदाद्दक्षिणपदत्रयेदक्षिणस्तनेअर्य
म्णेन • अर्यमण• ३७तद्दक्षिणाग्नेयकोणपदेदक्षिणहस्तेसावित्रेन • सावितारमा• ३८ तत्पश्चिमपदत्रयेजठरद
क्षिणभागेविवस्वतेन • विवस्वंतमा• ॥३९॥ तत्पश्चिमैकपदेनैर्ऋत्यकोणेवृषणयोर्विबुधाधिपाय• विबुधाधि
पमा• ॥४०॥ तदुत्तरपदत्रयेजठरवामभागेमित्रायन • मित्रमा • ॥४१॥ तदुत्तरवायव्यकोणपदेवामहस्तेराजय
क्ष्मणे • राजयक्ष्माणमा • ॥४२॥ तत्प्राक्पदत्रयेवामस्तनेपृथ्वीधराय • पृथ्वीधरमा • ॥४३॥ तत्प्रागीशानको
णपदेउरसिआपवत्साय • आपवत्समा• ॥ ४४॥ मध्यमनवपदेषुहृन्नाभ्योर्ब्रह्मणेन • ब्रह्माणमा• ॥ ४५॥

१ मध्यमनवकोष्ठकब्रह्मपदसंलग्नेप्राग्गतेत्रिपदे.

तदुत्तरेसुवर्णनिर्मितंवृषवास्तुंवास्तोष्पतइतिमंत्रेणस्थाप्यततोमंडलाद्बहिरीशानादिकोणेषु ॥ चरक्यैन० चरकीमा० विदार्यै० विदारीमा० पूतनायै० पूतनामा० पापराक्षस्यै० पापराक्षसीमा० ततःपूर्वादिदिक्षु ॥ स्कंदाय० स्कंदमा० अर्यम्णे० अर्यमणमा० जृंभकाय० जृंभकमा० पिलिपिच्छाय० पिलिपिच्छमा० इत्यावाह्यप्रागाद्यष्टदिक्षुइंद्राद्यष्टौलोकपालांस्तत्प्रकाशकैर्मंत्रैर्नाममंत्रैर्वावाहयेत् ।मंडलादीशान्यांमहीद्यौरित्यादिकलशेवरुणंस्थाप्यपूजयेदितिकोचित् ॥ नयप्रजामितिप्रतिष्ठाप्यशिख्यादिदेवताःषोडशोपचारैःपंचोपचारैर्वासंपूज्य ॥ ततोवास्तुमंडलात्पश्चिमायांकुंडेस्थंडिलेवाउत्खननादिभूसंस्कारंविधाय ॥ सयथा ॥ वास्तुशांतिहवनंकर्तुंस्थंडिलादिसकलंकर्मकरिष्ये ॥ इतिसंकल्प्य ॥ गोमयोपलेपादिवरदनामानमग्निंप्रतिष्ठाप्य ॥ अग्नेरीशान्यांग्रहान्ग्रहकलशंचसंस्थाप्यतत्रवरुणंसंपूज्य ॥ देवदानवसंवादेमथ्यमानेमहोदधौ ॥ उत्पन्नोसितदाकुंभविष्णुनाविधृतःस्वयं ॥ त्वत्तोयेसर्वतीर्थानिदेवाःसर्वेत्वयिस्थिताः ॥ त्वयितिष्ठंतिभूतानित्वयिप्राणाःप्रतिष्ठिताः ॥ शिवःस्वयंत्वमेवासिविष्णुस्त्वंचप्रजापतिः ॥ आदित्यावसवोरुद्राविश्वेदेवाःसपैतृकाः ॥ त्वयितिष्ठंतिसर्वेपियतःकामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञंकर्तुमीहेजलोद्भव ॥ सान्निध्यंकुरुदेवेशप्रसन्नोभवसर्वदा ॥ इतिप्रार्थ्य ॥ ततोन्वाधानं ॥ आचार्यःश्रद्धएहीत्यादिव्याहृत्यंतमुक्त्वा ॥ वैशेषिकहोमे ॥ आदित्यादिनवग्रहदेवताः ॥ अन्वाधानोक्तरीत्यान्वाधाय ॥ अत्रप्रधानं ॥ शिखिनं ॥ पर्जन्यं ॥ जयंतं ॥ कुलिशायुधं ॥ सूर्यं ॥ सत्यं ॥ भृशं ॥ आकाशं ॥ वायुं ॥ पूषणं ॥ वितथं ॥ गृहक्षतं ॥ यमं ॥

गंधर्वं ॥ भृंगराजं ॥ मृगं ॥ पितृन् ॥ दौवारिकं ॥ सुग्रीवं ॥ पुष्पदंतं ॥ जलाधिपं ॥ असुरं॥ शोषं ॥ पापं ॥ रोगं ॥ अहिं ॥ मुख्यं ॥ भल्लाटं ॥ सोमं ॥ सर्पं ॥ अदितिं ॥ दितिं ॥ अपः ॥ सावित्रं ॥ जयं ॥ रुद्रं ॥ अपउपस्पृश्य ॥ अर्यमणं ॥ सवितारं ॥ विवस्वंतं ॥ विबुधाधिपं ॥ मित्रं ॥राजयक्ष्माणं ॥ पृथ्वीधरं ॥ आपवत्सं ॥ ब्रह्माणं ॥ एताःपंचचत्वारिंशद्देवताःऔदुंबरसमित्तिलपायसाज्यद्रव्यैःप्रत्येकंप्रति द्रव्यंअष्टोत्तरशताष्टाविंशत्यष्टान्यतमसंख्याकाभिराहुतिभिः ॥ वास्तोष्पतइतिचतसृभि ॠग्भिःपूर्वोक्तद्रव्यैः प्रत्यृचंपूर्वोक्तसंख्याहुतिभिः॥ अथवा॥वास्तोष्पतइतिचत्वारोमंत्राःएकैकेनमंत्रेणसप्तविंशतिःसप्तविंशतिर्वा हुतयइत्यष्टोत्तरशतमितिदानमयूखे ॥ तत्पक्षेप्रत्यृचमितिनोल्लेखः ॥ वास्तोष्पतिंवास्तोष्पतइतिचतसृभिः वास्तोष्पतेध्रुवास्थूणामितिचपंचविंशतिःपंचवाबिल्वफलैस्तद्बीजैर्वायक्ष्ये ॥ चरकीं ॥ विदारीं ॥ पूतनां पापराक्षसीं स्कंदं ॥ अर्यमणं ॥ जृंभकं ॥ पिलिपिच्छं ॥ इंद्रं ॥ अग्निं ॥ यमं ॥ निर्ॠतिं ॥ अपउप स्पृश्य ॥ वरुणं वायुं ॥ सोमं ॥ ईशानं ॥ एताःदेवताःपूर्वोक्तद्रव्यैःप्रत्येकंअष्टचतुरन्यतमसंख्याहुतिभिः अंगहोमेवरुणंद्विरित्यादिसामान्यप्रधानांतंहुत्वा ॥ इमानिउपकल्पितानिहवनीयद्रव्याणिहोमपर्याप्तानिया क्ष्यमाणदेवताःताभ्यःमयापरित्यक्तानिनमम॥ यथादैवतानिसंतु॥ ततःअन्वाधानोक्तसंख्ययाग्रहहोमंसमा प्य ॥ प्रधानहोमंकुर्यात् ॥ ॐ शिखिनेस्वाहा ॥ ॐ पर्जन्यायस्वाहा ॥ ॐ जयंताय० ॐ कुलिशायुधाय० ॐ सूर्याय० ॐ सत्याय० ॐ भृशाय० ॐआकाशाय० ॐ वायवे ० ॐ पूष्णे ० ॐ वितथाय ०ॐ गृहक्ष

 ताय ० यमाय ० गंधर्वाय ० भृंगराजाय ० मृगाय ० पितृभ्यः ० दौवारिकाय ० सुग्रीवाय ० पुष्पदंताय ० 
जलाधिपाय ० असुराय ० शोषाय ० पापाय ० रोगाय ० अहये ० मुख्याय ० भल्लाटा ० सोमाय ० सर्पाय ० अ
 दित्यै ० दित्यै ० अद्भ्योन ० सावित्राय ० जयाय ० रुद्राय ० अर्यम्णे ० सवित्रे ० विवस्वते ० विबुधाधिपाय ० मित्राय ०
राजयक्ष्मणे ० पृथ्वीधराय ० आपवत्साय ० ब्रह्मणे ० ॐ वास्तोष्पतेप्रतिजानीह्यस्मान्स्वावेशोअनमीवोभ
वानः॥यत्त्वेमहेप्रतितन्नोजुषस्वशन्नोभवद्विपदेशंचतुष्पदेस्वाहा ॥वास्तोष्पतेप्रतरणोनएधिगयस्फानोगोभिर
श्वेभिरिंदो ॥ अजरासस्तेसख्येस्यामपितेवपुत्रान्प्रतिनोजुषस्वस्वाहा ॥ वास्तोष्पतेशग्मयासंसदातेसक्षीम
हिरण्वयागातुमत्या ॥ पाहिक्षेमंउतयोगेवरन्नोयूयंपातस्वस्तिभिःसदानःस्वाहा ॥ अमीवहावास्तोष्पतेवि
श्वारूपाण्याविशन् ॥ सखासुशेवएधिनःस्वाहा ॥ चतुर्णांमंत्राणामाश्वलायनीयधर्मः ॥ सूक्तक्रमपाठात्॥
अन्वाधानसंख्ययाहुतीर्हुत्वा ॥ ॐ वास्तोष्पतेप्रतिजानी ० देस्वाहा ॥ १ वास्तोष्पतेप्रतर ० स्वुस्वाहा ॥२॥
वास्तोष्पतेशग्मया ० नःस्वाहा ॥ ३ अमीवहा ० एधिनःस्वाहा ॥ ४ वास्तोष्पतेध्रुवास्थूणांसत्रंसोम्यानां ॥
द्रप्सोभेत्तापुरांशश्वतीनामिंद्रोमुनीनांसखास्वाहा ॥ ५ ॥ इतिबिल्वफलैस्तद्बीजैर्वाहुत्वा ॥ ॐ चरक्यै 
स्वाहा॥ॐविदार्यैस्वाहा ॥ ॐ पूतनायैस्वाहा ॥ ॐ पापराक्षस्यैस्वाहा ॥ ॐ स्कंदायस्वाहा ॥ ॐ अर्य

म्णेस्वाहा ॥ ॐ जृंभकायस्वाहा ॥ ॐ पिलिपिच्छायस्वाहा ॥ इंद्रायस्वाहा ॥ ॐ अग्नये॰ यमाय॰ निर्ऋतये॰ अपउपस्पृइय ॥ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ ततइमंमेवरुणेत्यादिहोमशेषंसमापयेत् ॥ ततःवास्तुमंडलपश्चिमदेशे ॐ शिखिनेनमः॥ इमंपायसबलिंसमर्पयामीत्येवंशिख्यादिभ्यःप्रत्येकंसमुच्चयेन वादद्यात् ॥ चरकयादिभ्यःपायसबलीन्दत्वा ॥ शिख्यादिप्रीतयेकांचनंब्रह्मप्रतियधेनुंब्राह्मणायदद्यात् ॥ नवग्रहेभ्योदिक्पालेभ्यश्चसदीपमाषभक्तबलीन्दत्वा ॥ प्रक्षालितपादपाणिर्द्वादशाष्ट चतुर्गृहीतेनवाज्येनपूर्णाहुतिंजुहुयात् ॥सयथा॥कृतहोमस्यसंपूर्णफलावाप्तयेपूर्णाहुतिंहोष्यामि ॥इतियजमानःसंकल्प्यततआचार्यः ॥ ॐ सप्ततेअग्नेसमिधःसप्तजिव्हाःसप्तर्षयःसप्तधामप्रियाणि ॥ सप्तहोत्राःसप्तधात्वायजंतिसप्तयोनीरापृणस्वाघृतेनस्वाहा॥सप्तवतेअग्नयइदं॰ ॥ ततआचार्यादयः॥आपोहिष्ठेतितिसृभिर्हिरण्यवर्णाइतिचतसृभिःपवमानानुवाकेनसुरास्त्वामभिषिंचंत्वित्यादिपौराणमंत्रैश्चसपत्नीकंयजमानंशांतिकलशोदकेनाभिषिंचेयुः॥पौराणमंत्रायथा ॥ सुरास्त्वामभिषिंचंतुब्रह्मविष्णुमहेश्वराः ॥ वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोग्निर्भगवान्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः॥ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा ॥कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिःकांतिस्तुष्टिश्चमातरः ॥ एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चंद्रमाभौमोबु

हि॰ ग्र॰ धजीवसितार्कजाः ॥ ग्रहास्त्वामभिषिंचंतुराहुःकेतुश्चपूजितः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋ वा॰ शां॰
षयोमुनयोगावोदेवमातरएवच ॥ देवपत्न्योद्रुमानागदैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजा
॥१३५॥ नोवाहनानिच ॥ औषधानिचरत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥
एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ॥ सर्वौषधीरनुलिप्यस्नापयेयुः ॥ ततोयजमानःब्रह्मस्थानेसुरूपांभू
षितांस्त्रीरूपांपृथ्वींध्यात्वा ॥ ॐ धरायैनमइतिसंपूज्यप्रार्थयेत् ॥ सर्वदेवमयंवास्तुसर्वदेवमयंपरं ॥ इतिप
ठित्वा ॥ ततोगृहंप्रागादितस्त्रिसूत्र्यपावमानेनसूक्तेनराक्षोघ्नेनचवेष्टयेत् ॥पवमानःसुवर्जनः॰ ॥ जातवेदामां
जयंत्यापुनातु ॥ इतिपावमानं ॥ कृणुष्वपाजःप्रसिं॰ परिबाधोअदेवीः ॥ इतिराक्षोघ्नं ॥ ततोदुग्धपूर्णज
लपूर्णयाचसस्तनकुंभ्यातथैवसूक्तद्वयेनबहिरभ्यंतरेचाशिव ॐ शिवमितियजुषाधाराद्वयमविच्छिन्नंकुर्यात् ॥
अथयजमानःगृहस्याग्नेयदेशेजानुदघ्नमवटंखात्वातंगोमयेनोपलिप्यपुष्पाक्षतादिभिरलंकृत्य ॥ शैवालसप्त
बीजानिचंदनंचप्राक्षिप्य ॥ जलपूर्णंशुक्लपुष्पयुतंगंधादिभिरर्चितंकुंभंहस्तद्वयेनादायजानुभ्यामवनिंगत्वा
ॐ नमोवरुणायेतितज्जलेनगर्तंपूरयेत् ॥ तत्प्रागवर्त्तेप्रदक्षिणेपुष्पेवोर्ध्वमुखेशुभंवैपरीत्येत्वशुभं ॥ ततोमृ ॥१९५॥
न्निर्मितपेटिकायांसप्तबीजदध्योदनशैवालपुष्पाणिप्रक्षिप्यपूर्वस्थापितवृषवास्तुंतूर्यमंगलघोषेणानीयतस्यां

१ मध्यनवपदे.

संस्थाप्यगंधादिभिःपूजयेत्प्रार्थयेच्च॥पूजितोसिमयावास्तोहोमाद्यैरर्चनैःशुभैः ॥प्रसीदपाहिविश्वेशदेहिमेगृह
जंसुखं ॥ वास्तुमूर्तेनमस्तेस्तुभूशय्याभिरतप्रभो॥मद्गृहंधनधान्यादिसमृद्धंकुरुसर्वदा ॥ ततःपेटिकामाच्छा
द्यतस्मिन्गर्ते शनैर्निक्षिपेदनेनमंत्रेण ॥ सशैलसागरांपृथ्वींयथावहसिमूर्धनि ॥ तथामांवहकल्याणसंपत्सं
ततिभिःसह ॥ गर्त्तंमृदापूर्यमृदधिकेउत्तमंसाम्येमध्यमंन्यूनेत्वधमं ॥ गर्तोपरिगोमयेनोपलिप्य ॥ शुक्लगं
धपुष्पाक्षतैर्भूषयेत् ॥ ततोग्नेःपश्चादाचार्यादीन्संपूज्य ॥ सवत्सांगांअलंकृतांवासोयुगंचब्रह्मणेनड्वाहं
सदस्यायाश्वंवासोयुगंचान्येभ्योऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वाकर्मसाद्गुण्यायविष्णुंस्मरेत् ॥ ब्राह्मणा
न्भोजयित्वाभूयसींदत्वा ॥ ग्रहाणांशिख्यादिवास्तुदेवतानांपूजांकृत्वाक्षमाप्य ॥ यांतुदेवेतिविसृज्याचार्यह
स्तेसंप्रतिपाद्याग्निंसंपूज्यगच्छगच्छेतिविसृज्यब्राह्मणैः सहशांतिंपठेत् ॥ यस्यस्मृत्येतिविष्णुंस्मृत्वा ॥ क
र्मेश्वरार्पणंकुर्यात् ॥ एवंशांतिंविधाय ॥ तस्मिन्नहनिद्वितीयेहनिवाघटिकास्थापनंकृत्वापरिभाषोक्तसुमुहू
र्तेसूत्रोक्तगृहप्रवेशंकुर्यात् ॥ सयथा ॥ सपत्नीकोयजमानःप्रागुक्तवत्कलशंपत्न्याग्राहयित्वा ॥ विप्रसहितः
मंत्रपाठमंगलवाद्यघोषयुक्तःवक्ष्यमाणमंत्रैर्गृहंप्रविशेत् ॥ तेचमंत्राः ॥ गृहामाबिभीतमावेपिध्वमूर्जंबिभ्रतए
मसि ॥ ऊर्जंबिभ्रद्वसुनिःसुमेधागृहानेमिमनसामोदमानः ॥एषामभ्येतिप्रवसन्नेतिसौमनसोबभुः ॥ गृहानु
पव्हयामहेतेनोजानंतुजानतः॥उपहूताइहगावउपहूताअजावयः॥अथोअन्नस्यकीलालउपहूतोगृहेषुनः ॥
उपहूताभूरिसखासखायःस्वादुसंमुदः ॥ अरिष्टाःसर्वपूरुषागृहानःसंतुसर्वदा॥ऊर्जस्वंतःपयस्वंतइरावंतोहसा।

मुदः ॥ अनश्या अतृष्या गृहामास्मद्बिभीतन ॥ इतिगृहमभ्येति॥ क्षेमायवः शांत्यैप्रपद्येशिव ँ शग्म ँ शंयोः
शंयोः इतिगृहंप्रविशति॥ नतदहरागतः कलहंकरोति॥ गृहानह ँ सुमनसः प्रपद्येवीरघ्नोवीरतमः सुशेवान् ॥ इरांव
 हंतः सुमनस्यमानास्तेष्वह ँ सुमनाः संविशामि ॥ इतिसंविशति॥ विश्वाउतत्वयावयंधाराउदन्याइव॥ अतिगा
हेमहिद्विषः ॥ इतिभार्यांसमीक्षते ॥ देशकालौसंकीर्त्यकृतगृहप्रवेशांगत्वेनगणेशपूजनंस्वस्तिपुण्याहवाच
नंमातृकापूजनंनांदीश्राद्धंचकरिष्ये ॥ तानिकृत्वाभूयसींदत्वाज्योतिर्वित्पूजनंकृत्वाब्राह्मणभोजनंसंकल्प्यइ
ष्टैःसहभुंजीयात्॥ इतिवास्तुशांतिप्रयोगः ॥ याज्ञिकानांमुदेवास्तोःप्रयोगःशोधितोधुना ॥ अनेनप्रीयतांदेवीकृ
ष्णासर्वाघनाशिनी ॥ ॥ ७ ॥ ॥ ७॥ ॥ ७ ॥ ॥ ७ ॥

नसंज्ञकानांविश्वेषांदेवानां॥अपसव्यं ॥अस्मत्पितृपितामहप्रपितामहानांअमुकशर्मणांगोत्राणांवसुरुद्रादित्य
स्वरूपाणां ॥ मातृपितामहिप्रपितामहीनांअमुकदानांगोत्राणांवसुरुद्रादित्यस्वरूपाणांसापत्नमातुःदायाःगो
त्रायाःवसुरूपायाःमातामहमातुःपितामहमातुःप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणांमाताम
हीमातुःपितामहीमातुःप्रपितामहीनांअमुकदानांगोत्राणांवसुरुद्रादित्यस्वरूपाणांपत्न्याःदायाःगोत्रायाःवसु
रूपायाःपुत्रस्यशर्मणःगोत्रस्यसपत्नीकस्यवसुरूपस्यदुहितुःदायाःगोत्रायाःसभर्तृकायाःवसुरूपायाःपितृव्य
स्यशर्मणःगोत्रस्यसपत्नीकस्यससूतस्यवसुरूपस्यमातुलस्यशर्मणःगोत्रस्यसपत्नीकस्यवसुरूपस्यभ्रातुःश
र्मणःगोत्रस्यसपत्नीकस्यससूतस्यवसुरूपस्यापितृभगिन्याःदायाःगोत्रायाःसभर्तृकायाःससूतायाः वसूरूपायाः
मातृभगिन्याःदायाःसभर्तृकायाःससूतायाःवसुरूपायाःआत्मभगिन्याःदायाःसभर्तृकायाःससूतायाः वसुरू
पायाःश्वसुरस्यशर्मणःगोत्रस्यसपत्नीकस्यससूतस्यवसुरूपस्यअस्मत्गुरोःशर्मणःगोत्रस्यसपत्नीकस्यससूत
स्यवसुरूपस्याशिष्यस्यशर्मणःगोत्रस्यसपत्नीकस्यससूतस्यवसुरूपस्यआप्तस्यएतेषांश्रेयोर्थमोक्षर्थंतृप्त्यर्थंदेश
कालाद्यनुसारतःसदैवंसाग्नौकरणंसापिंडंपार्वणैकोद्दिष्टेनविधिनाअन्नेनहविषासद्यःकरिष्ये॥ ताम्रपात्रेयवोदकं
रजतपात्रेतिलोदकंपूरयित्वा ॥ तदंगत्वेनगृहभांडादिशुद्ध्यर्थंयवतिलोदकाभिमंत्रणंप्रायाश्चित्तसूक्तजपंचकरि
ष्ये॥ इमंमेगंगेयमुनेसरस्वतिशुतुंद्रिस्तोमं सचतापरुष्णिया॥ असिक्नियामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासु

षोमंया ॥ गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ॥ ईश्वरीं सर्वभूतानांतामिहोपह्वयेश्रियं ॥ गंधंक्षिप्त्वा॥
शरासःकुशरासोदर्भासःसैर्याउत ॥ मौंजाअदृष्टावैरिणाःसर्वेसाकंन्यंलिप्सत ॥ कुशान्क्षिप्त्वा ॥ यवोसिधान्य
राजोवावारुणोमधुसंयुतः ॥निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतम्॥इतियवान् ॥तिलोसिसोमदेवत्योगोस
वेदेवनिर्मितः ॥ प्रत्नवद्भिःप्रत्तःस्वधयापितॄनिमाँल्लोकान्प्रीणयाहिनःस्वधानमः ॥ इतितिलान् ॥ यवोदकदे
वताभ्यःइदंगंधतुलसीपत्रंसर्वेउपचाराःयवैःसफलैःसहिरण्यैःसंपूर्णाःसंतुतिलोदकदेवताभ्यःइदंगंधतुलसी
पत्रंसर्वेउपचाराःतिलैःसफलैःसहिरण्यैःसंपूर्णाःसंतु ॥कूष्मांडमंत्राःपुरुषसूक्तंचजपित्वा॥ शुचीवोहव्यामरुतः
शुचीनांशुचिंहिनोम्यध्वरंशुचिभ्यः ॥ ऋतेनसत्यमृतसापआयन्शुचीजन्मानःशुचयःपावकाः॥अग्निःशु
चिव्रततमःशुचिर्विप्रःशुचिःकविः॥शुचीरोचतआहुतः ॥ उदग्नेशुचयस्तवशुक्राभ्राजंतईरते ॥ तवज्योतींष्य
र्चयः ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुंडरीकाक्षंसबाह्याभ्यंतरःशुचिः ॥ सर्वशुचिः ॥
इतिआत्मानंप्रोक्ष्य ॥ यद्देवादेवहेळनंदेवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचततस्यर्तेनमामित ॥ दे
वाजीवनकाम्यायद्वाचानृतमूदिम ॥ तस्मान्नइहमुंचतविश्वेदेवाःसजोषसः ॥ ऋतेनद्यावापृथिवीऋतेनत्वं
सरस्वति ॥ कृतान्नःपाह्येनसोयत्किंचानृतमूदिम ॥ तत्सवितुर्वरेण्यंभर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचो
दयात् ॥ गायत्र्याश्राद्धपाकादीनांपवित्रतास्तु ॥ सर्वेपाकाःशुचयोभवंतु ॥ पाकप्रोक्षणविधिवदस्तु ॥ अ

स्तुविधिवत् ॥ हस्तेकुशान्हिरण्यंचगृहीत्वा ॥ समस्तसंपत्समवाप्तिहेतवःसमुत्थितापत्कुलधूमकेतवः ॥
अपारसंसारसमुद्रसेतवःपुनंतुमांब्राह्मणपादपांसवः ॥ आपद्घनध्वांतसहस्रभानवःसमीहितार्थार्पणकामधे
नवः ॥ समस्ततीर्थांबुपवित्रमूर्तयोरक्षंतुमांब्राह्मणपादपांसवः ॥विप्रौघदर्शनात्क्षिप्रंक्षीयंतेपापराशयः ॥ वंदना
न्मंगलावाप्तिरर्चनादच्युतंपदं ॥ आधिव्याधिहरन्नृणांमृत्युदारिद्र्यनाशनं ॥ श्रीपुष्टिकीर्तिदंवंदेविप्रश्रीपाद
पंकजं ॥ यावंतीर्वैदेवतास्ताःसर्वावेदविदिब्राह्मणेवसंतितस्माद्ब्राह्मणेभ्योवेदविद्भ्योदिवेदिवेनमस्कुर्यान्नाश्ली
लंकीर्तयेदेताएवदेवताःप्रीणाति ॥ अपसव्यं ॥ अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भि
श्चमयाचश्राद्धकारिणा ॥ अद्यतिथौममपितुःउद्दिश्यकन्यागतेसवितरिसकृन्महालयापरपक्षिकंश्राद्धंक
र्तुंममअधिकारसंपदस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्राद्धाधिकारसंपत् ॥ कालस्यमुख्यकालोस्त्वितिभवंतोब्रु
वंतु ॥ कालस्यमुख्यकालोस्तु ॥ सव्यं ॥ नमोदेवेभ्यः ॥ प्राचीनावीती ॥ स्वधापितृभ्यः ॥ सव्यं ॥ दे
वस्थानेक्षणंदत्वाभवद्भिःप्रसादःकर्तव्यः॥ सुकर्तव्यः ॥ अपसव्यं ॥ पितृपितामहप्रपितामहस्थानेक्षणंदत्वा
भवद्भिःप्रसादःकर्तव्यः॥मातृपितामहिप्रपितामह्यःस्था॰ सापत्नमातृस्था॰ मातामहमातुःपितामहमातुःप्रपि
तामहस्थाने॰ मातामहीमातुःपितामहीमातुःप्रपितामह्यःस्था॰ पत्नीस्था॰ पितृव्यसपत्नीकससूतमातुलसप
त्नीकससूतभ्रातुसपत्नीकससूतस्था॰ पितृभगिनिसभर्तृकससूतमातृभगिनिसभर्तृकससूतआत्मभगिनिस
भर्तृकससूतश्वशुरसपत्नीकससूतगुरुसपत्नीकससूतशिष्यसपत्नीकससूतस्था॰सुकर्तव्यःसर्वत्रविभक्तियो

 

ज्या ॥ सव्यं ॥ देवाःस्वागतं ॥ सुस्वागतं ॥ देवार्थंगोमयेनउत्तरेचतुरस्रंमंडलंकृत्वा ॥ अपसव्यं॥पित्रार्थंदक्षिणे
वर्तुलाकारंमंडलंकुर्यात् ॥ सव्यं ॥ धूरिलोचनसंज्ञकानांविश्वेषांदेवानांपाद्यस्थानेइदमासनं ॥पाद्यासनायनमः
इदंगंधतुलसीपत्रंसर्वेउपचाराःयवैःसंपूर्णाःसंतु ॥ अपसव्यं॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ न
मःस्वाहायैस्वधायैनित्यमेवनमोनमोनित्यमेवनमोनमः ॥ अस्मत्पितृपितामहप्रपितामहानांमातृपितामहि
प्रपितामहीनांसपत्नमातुःमातामहमातुःपितामहमातुःप्रपितामहानांमातामहीमातुःपितामहीमातुःप्रपिताम
हीनांअन्येषांनानाशर्माणांनानागोत्राणांवस्वादिरूपाणांइदंपाद्यासनं ॥ पाद्यासनायनमःइदंगंधतुलसीपत्रंभृ
गिराजपत्रंचसर्वेउपचाराःतिलैःसंपूर्णाःसंतु ॥ सव्यं ॥ देवाःस्वागतं ॥ सुस्वागतंदेवाःअन्नंनमः॥ गधंन॰
यवाक्षतपुष्पंन॰ सर्वेउपचाराःयवैःसंपूर्णाःसंतु ॥ नमोस्त्वनंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥
सहस्रनाम्नेपुरुषायशाश्वतेसहस्रकोटीयुगधारिणेनमः ॥ धूरिलोचनसंज्ञकाःविश्वेदेवाःभूर्भुवःसुवःइदंवःपा
द्यं ॥ सुपाद्यं ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ पितृपितामहप्रपितामहाःस्वा
गतं ॥ सुस्वागतं ॥ अपसव्यं ॥पितृपितामहप्रपितामहाःअन्नंनमःगंधं॰ तिलाक्षतपुष्पं॰ सर्वेउपचाराःति
लैःसंपूर्णाःसंतु ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनंसु
वृजिनासुविक्षु ॥ अस्मत्पितृपितामहप्रपितामहाःशर्माणःगोत्राःवसुरुद्रादित्यस्वरूपाःभूर्भुवःसुवःइदंवःपा

 

यं ॥ शन्नोदेवीरभिष्टय आपोभवंतुपीतये ॥ शंयोरभिस्रवंतुनः ॥ एवंपित्रादिसर्वेपितरः ॥ सव्यं ॥ ततः स्वपादौप्रक्षाल्यपवित्रेविसृज्य ॥ आचम्यपुनःपवित्रेधृत्वा ॥ देवाःसमाध्वं ॥ सुसमास्महे ॥ अपसव्यं ॥ पितृपितामहप्रपितामहाः ॥ समाध्वं ॥ सुसमास्महे ॥ मातृपितामहिप्रपितामह्यःसमाध्वं ॥ सुसमास्महे ॥ एवंसंबोधनांतंसर्वत्र ॥ सव्यं ॥ उपक्रांतंकन्यागतेसवितरिसकृन्महालयापरपाक्षिकश्राद्धाख्यंकर्मकरिष्ये ॥ कुरुष्व ॥ श्राद्धस्यकर्मणःसिद्धिरस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्राद्धस्यकर्मणःसिद्धिः ॥ सव्यं ॥ श्राद्धस्यकर्मणःसिद्धिरस्त्वितिभवंतोब्रुवंतु ॥ अस्तुश्राद्धस्यकर्मणःसिद्धिः ॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः ॥ येअत्रविहिताश्राद्धेसावधानाभवंतुते ॥ भवामः ॥ धूरिलोचनसंज्ञकानांविश्वेषांदेवानांब्राह्मणेइदमासनं ॥ स्वासनं ॥ अत्रास्यतांधर्मोसि ॥ अत्रास्यामः ॥ कन्यागतेसवितरिसकृन्महालया० श्राद्धेदैवेक्षणःक्रीयतां ॥ तथा ॥ प्राप्नोतुभवान् ॥ प्राप्नवानि ॥ अर्घ्यमासाद्यदेवाग्रेप्रागग्रौकुशौस्थाप्य ॥ तयोरुपरिअर्घ्यपात्रेसंनिधाय ॥ जलंप्रोक्ष्य ॥ उत्तानीकृत्यद्वौद्वौकुशौनिधायजलंपूरयित्वायवान्वामहस्तेगृहीत्वा ॥ धूरिलोचनसंज्ञकान् विश्व. न्देवान् भवत्सुयथायथंआवाहयिष्ये ॥ आवाहय ॥ विश्वेदेवासआगतःशृणुतामइम ँ हवं ॥ एदंबर्हिर्निषीदत ॥ विश्वान्देवान्आवाहयामि ॥ आवाहय ॥ विश्वेदेवाःशृणुतेम ँ हवंमेयेअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिह्वाउतवायजत्राआसद्यास्मिन्बर्हिषिमादयध्वं ॥ आगच्छंतुविश्वेदेवाविश्वेदेवाः ॥

आगच्छामः ॥ विश्वेभ्योदेवेभ्योवोजुष्टंगृण्हामि ॥ इतिद्विः ॥ शन्नोदेवीरभिष्टयआपोभवंतुपीतये ॥ शंयोरभिस्त्रवंतुनः ॥ यवोसिधान्यराजोवावारुणोमधुसंयुतः ॥ निर्णोदःसर्वपापानांपवित्रमृषिभिःस्मृतं ॥ अर्घ्यपात्रयोः ॥ इदंगंधतुलसीपत्रंसर्वेउपचाराःयवैःसंपूर्णाःसंतु ॥ देवार्घ्यपात्रेसंपन्ने ॥ सुसंपन्ने ॥ देवेभ्यः स्वाहार्घ्याआपःअस्तुस्वाहा॥हस्तार्चनविधेःसर्वस्यपरिपूर्णतास्तु ॥ धूरिलोचनसंज्ञकाविश्वेदेवाःभूर्भुवःसुवः इदंवोअर्घ्यंस्वाहानमः ॥ अस्त्वर्घ्यं ॥ यादिव्याआपःपयसासंबभूवुर्याअंतरिक्षउतपार्थिवीर्याः ॥ तासांत्वा सर्वासा ँ रुचाअभिषिंचामिवर्चसा ॥ इदमर्घ्यंदत्तंनमम ॥धूरिलोचन० देवाःयथाभागशःअमीवोगंधाः ॥ सुगंधाः ॥ स्वाहानमोनमम ॥ पूजार्थेतुलसीपत्रं ॥ सुपत्रं ॥ स्वाहानमोनमम ॥ एषवोधूपः ॥ स्वाहान० एषवोदीपः ॥ स्वाहानमो० ॥ आच्छादनार्थेइदंबार्ह्यस्पत्यंवासः ॥अस्तुआच्छादनं ॥ स्वाहान०॥ पवित्रार्थेइमौकुशौ ॥ अस्तुपवित्रं ॥ स्वाहान० ॥ धारणार्थेयज्ञोपवीतं ॥ अनुलेपनार्थेगोपीचंदनं ॥ फलार्थेपूगीफलं ॥ सर्वालंकारार्थेव्यवहारिकद्रव्यं ॥ स्वाहान० ॥ सर्वालंकारपरिपूर्णमस्त्वितिभवंतो ब्रुवंतु ॥ सर्वालंकारपरिपूर्णमस्तु ॥ युवासुवासाःपरिवीतआगात्सउश्रेयान्भवतिजायमानः ॥ तंधीरासः कवयउन्नयंतिस्वाधियोमनसादेवयंतः ॥ नमोदेवेभ्यःसदेवेभ्यःआसनादिअत्रगंधपुष्पधूपदीपाच्छादनांताः पंचोपचाराःसर्वेपरिपूर्णाभवंतु ॥ अर्चनविधिःस्वर्चितमस्तु ॥ न्यूनंतद्विधिवदस्तु ॥ यस्यस्मृत्याचनामो

त्त्रयातपोयज्ञक्रियादिषु ॥ न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं ॥ अच्युतायन॰गयायैन॰गदाधरायनमः ॥ पुंडरीकाक्षाय॰युष्मदनुज्ञयापित्राद्यर्चनंकरिष्ये ॥ कुरुष्व ॥ कुरुक्षेत्रंगयांगंगांप्रभासंपुष्कराणिच ॥ एतानिमनसाध्यात्वाश्राद्धकालेसदापठेत् ॥ अपसव्यं ॥ देवताभ्यःपितृभ्यश्चमहायोगिभ्यएवच ॥ नमः स्वाहायैस्वधायैनित्यमेवनमोनमोनित्यमेवनमोनमः ॥ अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रादित्यस्वरूपाणांब्रह्मणेइदमासनं ॥ स्वासनं ॥ अस्मत्मातृपितामहिप्रपितामहीनांदानांगोत्राणांवसुरुद्रादित्यस्वरूपाणांब्रह्मणेइदमासनं ॥ एवंषष्ठ्यांतंसर्वत्रआसनंदद्यात् ॥ अत्रास्यतांधर्मोसि ॥ अत्रास्यामः ॥ कन्यागतेसवितरिसकृन्महालयापरपक्षिकश्राद्धेपित्रेक्षणःक्रीयतां ॥ एवंसर्वत्रक्षणंदत्वा ॥ तथा ॥ प्राप्नोतुभवान् ॥ प्राप्नुवानि ॥ अर्घ्यमासाद्य ॥ ब्राह्मणाग्रेदर्भान्त्रीन्त्रीन्उदगग्रान्स्थाप्य ॥ तदुपरि अर्घ्यपात्राणिन्युब्जानिस्थाप्यजलेनप्रोक्ष्यउत्तानीकृत्यत्रीन्त्रीन्कुशान्दक्षिणाग्रान्निधाय ॥ जलंपूरयित्वा ॥ अस्मत्पितृपितामहप्रपितामहान्शर्मणःगोत्रान्वसुरुद्रादित्यस्वरूपान् ॥ मातृपितामाहिप्रपितामहीःदाःगोत्राःवसुरुद्रादित्यस्वरूपाः ॥ सापत्नमातरंदांगोत्रांवसुरूपांमातामहमातुःपितामहमातुःप्रपितामहान्शर्मणःगोत्रान्वसुरू॰मातामहीमातुःपितामहीमातुःप्रपितामहीःदाःगोत्राःवसु॰ पत्नींदांगोत्रांवसुरूपांपुत्रंशर्माणंसपत्नीकंवसुरूपं॰दुहितरंदांगोत्रांसभर्तृकांवसुरूपांपितृव्यंशर्माणंगोत्रंसपत्नीकंससूतंवसुरूपंमातुलंशर्माणंगोत्रंसपत्नीकंससूतंवसुरूपंभ्रातरंशर्माणंगोत्रंसपत्नीकंससूतंवसुरूपंपितृभगिनींदांगोत्रांसभर्तृकांससूतांवसुरू

पांमातृभगिनींदांगोत्रांसभर्तृकांससूतां॰ आत्मभगिनींदांगोत्रांसभर्तृकांससूतां॰ श्वशुरंशर्माणंगोत्रंसपत्नीकं
ससूतं॰ गुरुंशर्माणंगोत्रंसपत्नीकंससूतं॰ शिष्यंशर्माणंगोत्रंसपत्नीकंससूतं॰ भवत्सुयथायथंआवाहयिष्ये ॥
 आवाहय॥उशंतस्त्वाहवामहउशंतःसमिधीमहि ॥ उशन्नुशतआवहपितॄन्हविषेअत्तवे ॥ पितृपितामहप्रपि
तामहान्आवाहयामि ॥ आवाहय ॥ एवंद्वितीयांतंआवाहनं ॥ आयंतुनःपितरःसोम्यासोअग्निष्वात्ताःपथि
भिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदंत्वधिब्रुवंतुतेअवंत्वस्मान् ॥ आगच्छंतुपित्रादिसर्वेपितरः ॥ पित्रा
दिसमस्तापितृभ्योवोजुष्टंगृण्हामि ॥ अपःप्रदाय ॥ शन्नोदेवीरभिष्टय॰तुनः ॥ तिलोसिसोमदेवत्योगोस
वे॰नमः ॥ पित्रर्घ्यपात्रेइदंगंधतुलसीपत्रंसर्वेउपचाराःतिलैःसंपूर्णाःसंतु ॥ पित्रर्घ्यपात्रंसंपन्नं ॥ सुसं
पन्नं ॥ पितृभ्यःस्वधाअर्घ्याआपःहस्तार्चनविधेःसर्वस्यपरिपूर्णतास्तु ॥ अपोदत्वा ॥ अस्मत्पितःअमुकश
र्मन्अमुकगोत्रवसुरूपइदमर्घ्यंस्वधानमः ॥ एवंपितामहादिगुर्वंताःपितरःसमानं॥यादिव्याआपःपयसासंब
भूवुर्या॰वर्चसा ॥ इदमर्घ्यंदत्तंनमम ॥ पितॄणांस्वधेयंस्थानमसि ॥ स्थानमसिप्रणीतायैइदमासनं ॥ अ
त्रदेवपित्रोर्मध्येपितृहस्तकुशान्द्रोणेस्थापयित्वापितृणांस्वधेयंस्थानमसि ॥ स्थानमसिदेवतायैइदंगंधतुल 
सीपत्रंसर्वेउपचाराःतिलैःसंपूर्णाःसंतु ॥ स्थानमासिप्रच्छाद्य ॥ पितरःयथाभागशाअमीवोगंधाः ॥ सुगं
धाः ॥ स्वधानमोनमम ॥ इमानिपुष्पाणि ॥ सुपुष्पाणिस्वधान॰॥ एषवोधूपः ॥ सुधूपः ॥स्वधान॰॥ एषवो

दीपः ॥ सुदीपः ॥ स्वधा ०॥ आच्छादनार्थेइदंबार्हस्पत्यंवासः ॥ अस्त्वाच्छादनंच ॥ स्वधा०॥ पवित्रा
र्थेइमेकुशाः ॥ अस्तुपवित्रं ॥ धारणार्थेयज्ञोपवीतं ॥ अनुलेपनार्थेगोपीचंदनं ॥ फलार्थेपूगीफलं ॥ स
र्वालंकारार्थेव्यवहारिकद्रव्यं ॥ अस्त्वलंकारः ॥ प्रत्येकंस्वधानमोनमम ॥ सर्वालंकारपरिपूर्णमस्त्विवतिभ
वंतोब्रुवंतु ॥ सर्वालंकारपरिपूर्णमस्तु ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरासईयुः ॥ येपार्थिवेरज
स्यानिर्षत्तायेवानून ॥ सुवृजनासुविक्षु ॥ पितृभ्यः ॥ आसनादिअत्रगंधपत्रपुष्पधूपदीपआच्छादनांताःपं
चोपचाराःसर्वेपरिपूर्णाभवंतु ॥ अर्चनविधेस्वर्चनमस्तु ॥ न्यूनंतद्विधिवदस्तु ॥ यस्यस्मृत्याचनामो
क्त्या०च्युतं ॥ अच्युतायन० ॥ अनंताय० ॥ गयायै० ॥ गदाधरायै० ॥ सव्यं ॥ युष्मदनुज्ञयामंडला
दिकरिष्ये ॥ कुरुष्व ॥ तत्रदेवपात्रेचतुरस्रमंडलं ॥ अपसव्यं ॥ पितृपात्रेवर्तुलाकारंमंडलंअप्रदक्षिणंकु
र्यात् ॥ यवकुशयथासंख्यंमंडलेषुनिधाय ॥ तिलकुशयथासंख्यंमंडलेषुनिधाय ॥ अपसव्यं ॥ भस्मगृही
त्वा ॥ प्रथमंपितृपात्रेअप्रदक्षिणंपात्रंपरितोवेषयेत् ॥ बृहत्सामंक्षत्रभृद्वृद्धवृष्णियंत्रिष्टुभौजंःशुभितमुग्रवीरं ॥
इंद्रस्तोमेनपंचदशेनमध्यमिदंवातेनसगरेणरक्ष ॥ एवंपितामहादिपात्रे ॥ सव्यं ॥ देवपात्रेप्रदक्षिणंपरितो
वेषयेत् ॥ रक्षोहणोंवलगहनोवैष्णवान्खनामि० ॥ यथाचक्रधरोविष्णुस्त्रैलोक्यंपरिरक्षति ॥ एवंमंडलभ
स्मांकंसर्वभूतानिरक्षतु ॥ सर्वेषांपापदृष्टीनांचक्षुर्बध्नातिकेशवः ॥ भस्मनामंडलंकुर्यात्पांक्तिदोषोनविद्यते ॥

अपसव्यं ॥ पितॄणांकरशुद्धिः ॥ सव्यं ॥ देवानांकरशुद्धिः ॥ पात्रप्रोक्षणं ॥ उद्धरिष्याम्यग्नौचकरिष्यामि ॥ काममुद्ध्रियतांकाममग्नौचाक्रियतां ॥ युष्मदनुज्ञयाअग्नौकरणंकरिष्ये ॥ अपसव्यं ॥ कव्यवाहननामानमग्निंप्रतिष्ठापयामि ॥ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्या ँ २ आविवेश ॥ सप्तहस्तश्चतुःशृंगःसप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा ॥ बिभ्रद्दक्षिणहस्तैस्तुशक्तिमन्नंस्रुचंस्रुवं ॥ तोमरंन्यजनंवामेघृतपात्रंचधारयन् ॥ आत्माभिमुखमासीनएवंरूपोहुताशनः ॥ अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखोममसम्मुखोवरदोभव ॥ यथाहतद्वसवोगौर्यंचित्पदिषिताममुंचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्य ँ २ हःप्रातार्यग्नेप्रतरान्नआयुः ॥ परिसमुह्य ॥ दक्षिणाग्रैःकुशैःपरिस्तीर्य ॥ अन्नस्यदेवपवित्रसंस्कारंकृत्वा ॥ अदितेनुमन्यस्व ॥ अनुमतेनुमन्यस्व ॥ सरस्वतेनुमन्यस्व ॥ देवसवितःप्रसुव ॥ आज्येनअन्नमभिघार्यकुशेनभागंकुर्यात् ॥ हस्तेकुशंगृहीत्वा ॥ सोमायपितृमतेस्वधानमः ॥ सोमायपितृमतइदंनमम ॥ यमायांगिरस्वतेपितृमतेस्वधानमः ॥ यमायांगिरस्वतेपितृमतइदंन॰ ॥ अग्नयेकव्यवाहनायस्विष्टकृतेस्वधानमः ॥ अग्नयेकव्यवाहनायस्विष्टकृतइदं॰ ॥ यथाहतद्वसवोगौर्यंचित्पदिषितामनुंचतायजत्राः ॥ एवात्वमस्मत्प्रमुंचाव्य ँ २ हःप्रातार्यग्नेप्रतरान्नआयुः ॥ परिस्तरणादिविसृज्य ॥ अदितेन्वम ँ २ स्थाः ॥ अनुमतेन्वम ँ २

स्थाः ॥ सरस्वतेन्वम ऽ स्थाः ॥ देवंसवितःप्रासावीः ॥ यज्ञनमस्तेयज्ञं ॥ नमोनमश्चतेयज्ञ ॥ शिवेनंमे संतिंष्ठस्व ॥ स्योनेनंमेसंतिंष्ठस्व ॥ सुभूतेनंमेसंतिंष्ठस्व ॥ ब्रह्मवर्चसेनंमेसंतिंष्ठस्व ॥ यज्ञस्यर्धिमनुसंतिं ष्ठस्व ॥ उपंनेयज्ञनमः ॥ उपंतेनमः ॥ उपंतेनमः ॥ अनेनअग्नौकरणहोमेनतेनश्रीयज्ञनारायणःप्रीयतां ॥ पात्रशुद्धिः ॥ मूर्धानंदिवोअरतिंपृथिव्यावैश्वानरमृतायजातमग्निं ॥ कविऽसंम्राजमतिंथिंजनानामासन्ना पात्रंजनयंतदेवाः ॥ देवपूर्वकमाज्येनपात्राणांउपस्तरणं ॥ अपसव्यं ॥ आमासुपक्कमैरयआसूर्यंऽरोह योदिवि ॥ घर्मनसामंतपतासुवृक्तिभिर्जुष्टंगिर्वणसेगिरः ॥ सव्यं ॥ सर्वअन्नंदेवपूर्वपरिवेषयेत् ॥ त तोअन्नंतूष्णींगायत्र्या अभ्युक्ष्य ॥ दक्षिणंजान्वाच्यपात्रंहस्तेनधृत्वा ॥ सत्यंत्वर्तेनपरिषिंचामि ॥ पृथि वीतेपात्रंद्यौरपिधानंब्राह्मणस्त्वामुखेजुहोमिब्राह्मणानांत्वाप्राणापानयोर्जुहोम्यक्षितमसिमादेवानांक्षेष्ठाअमु त्रामुष्मिन्लोकेपृथिवीसमातस्याग्निरुपद्रष्टादत्तस्याप्रमादाय ॥ प्राणेनिविश्यामृतंजुहोमि ॥ इदंविष्णुर्विच क्रमेत्रेधानिदंधेपदं ॥ समूढमस्यपाऽसुरे ॥ धूरिलोचनसंज्ञकाविश्वेदेवादेवताइदंवोअन्नंविष्णोहव्यंरक्ष स्व ॥ धूरिलोचनसंज्ञकेभ्योविश्वेभ्योदेवेभ्यःइदमन्नंसोपस्करंपरिविष्टंपरिवेष्यमाणंचअस्यब्राह्मणस्यआतृ प्तिपर्यंतंअमृतरूपेणसंपद्यतांस्वाहाहव्यंनमम ॥ तत्सद्ब्रह्यायांविष्णुपदादिचतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तु

गयागदाधरःप्रीतोभवतु ॥ प्रीयतांगयागदाधरः ॥ येदेवादिव्येकादशस्थपृथिव्यामध्येकादशस्थ॥अप्सुपदो महिनैकादशस्थतेदेवायज्ञमिमंजुषध्वं ॥ देवेभ्यःयथासांकल्पितःप्रीयतां ॥ देवानुज्ञयापित्राद्यन्ननिवेदनंकरिष्ये ॥ कुरुष्व ॥ अपसव्यं ॥ सव्यंजान्वाच्य ॥ पितृपात्रेसत्यंत्वर्तेनपरिषिंचामि ॥ पृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्त्वामुखेजुहोमिब्राह्मणानांत्वाप्राणापानयोर्जुहोम्यक्षितमसिमापितॄणांक्षेष्ठाअमुत्रामुष्मिंलोकेपृथिव्यंतरिक्षंद्यौःसमातस्याअग्निर्वायुरादित्यउपद्रष्टादत्तस्याप्रमादाय ॥ प्राणेनिविश्यामृतंजुहोमि ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपांसुरे ॥ पितृपितामहप्रपितामहादेवताइदंवोअन्नंविष्णोःकव्यंरक्षस्व ॥ पितृपितामहप्रपितामहेभ्यःशर्मभ्यःगोत्रेभ्यःवसुरुद्रादित्यस्वरूपेभ्यःइदमन्नंसोपस्करंपरिविष्टंपरिवेष्यमाणंचअस्यब्राह्मणस्यआतृप्तिपर्यंतंअमृतरूपेणसंपद्यंतांस्वधाकव्यंनमम ॥ तत्सद्गयायां विष्णुपदादि चतुर्दशपदेषुदत्तमन्नमक्षय्यमस्तु ॥ गयागदाधरःप्रीतोभवतु ॥ प्रीयतांगयागदाधरः ॥ एवंमात्रादि॥सत्यंत्व० मातृपितामहिप्रपितामही।देवताविष्णोः० मातृपितामहिप्रपितामहीभ्यःदाभ्यःगोत्राभ्यःवसुरुद्रादित्यस्वरूपाभ्यःइदमिदमन्नंसोपस्करं० सापत्नमा० सापत्नमात्रेदायैगोत्रायैवसुरूपायैमातामहमातुःपितामहमातुःप्रपितामहादेवताविष्णोःकव्यंरक्षस्वमातामहमातुःपितामहमातुः प्रपितामहेभ्यः शर्मभ्यः गोत्रेभ्यःवसु० मातामहीमातुःपितामहीमातुःप्रपितामही।देवतावि० मातामहीमातुःपितामहीमातुःप्रपितामही

भ्यः दाभ्यः गोत्राभ्यः व० पत्नीदेवता० पत्न्यैदायैगोत्रायैव० पुत्रायशर्मणेगोत्रायरू० दुहित्रेदायैगोत्रायैवसु०
पितृव्याय० मातुलाय० भ्रात्रे० पितृभगिन्यै० मातृभगिन्यै० आत्मभगिन्यै० श्वशुराय० गुरवे० शि
ष्याय० इदमि० येचेहपितरोयेचनेहया ँ श्वविद्मया ँ उचनप्रविद्म ॥ अग्नेतान्वेत्थयदितेजातवेदस्तया
प्रत्त ँ स्वधयामदंतुस्वधानमः ॥ सव्यं ॥ मधुमतीः श्रावयिष्ये ॥ श्रावय ॥ मधुवाताऋतायतेमधुक्षरंति
सिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिव ँ रजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमा
न्नोवनस्पतिर्मधुमा ँ अस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ मधुमधुमधु ॥ सुमधु ॥ सर्वान्नंसुमधु ॥ श्राद्धम
च्छिद्रमस्त्वितिभवंतोब्रुवंतु ॥ अच्छिद्रंभवतु ॥ गयाश्राद्धमस्तु॥ सप्तव्याधादशारण्येमृगाःकालांजनेगिरौ॥
चक्रवाकाःसरोद्वीपेहंसाःसरसिमानसे ॥ तेपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयं
तेभ्योवसीदथ ॥ अमूर्तानांचमूर्तानांपितृणांदीप्ततेजसां ॥ नमस्यामिसदातेषांध्यायिनांयोगचक्षुषां ॥ च
तुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ ईशानःपितृरूपेणमहादेवो
महेश्वरः ॥ प्रीयतांभगवानीशःपरमात्मासदाशिवः ॥ अपसव्यं ॥ ईशानविष्णुकमलासनकार्तिकेयवन्हि
त्रयार्करजनीशगणेश्वराणां ॥ क्रौंचामरेंद्रकलशोद्भवकश्यपानांपदांनमामिसततंपितृमुक्तिहेतून् ॥ सव्यं ॥
ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतं ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भोक्ताहरिरन्नंप्र

हि०ब्र० जापतिः ॥ हरिर्विप्रशरीरस्तुभुंक्तेभोजयतेहरिः ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांपंचभिरेवच ॥ हूयतेचपुन श्रा०प्र०
र्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ नैवेद्यं ॥ अपसव्यं ॥ एकोविष्णुर्महद्भूतंपृथक्भूतान्य
॥१०४॥ नेकशः ॥ त्रीन्लोकान्व्याप्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनकन्यागतेसवितरिसकृन्महालयश्राद्धेब्रा
ह्मणभोजनेनपित्रादिसमस्तपितरस्वरूपीजनार्दनवासुदेवःप्रीयतांनमम ॥ सव्यं ॥ देवाःतत्सत्अमृतम
स्तु ॥ अपसव्यं॥ पितरःतत्सत्ब्रह्मार्पणमस्तु ॥ सव्यं ॥ श्रद्धायांप्राणेनिविष्टोमृतंजुहोमि ॥ श्रद्धायामपा
नेनिवि० ॥ श्रद्धायांव्यानेनिवि० ॥ श्रद्धायामुदानेनिविष्टोमृ० ॥ श्रद्धायाँसमानेनिविष्टोमृतंजुहोमि॥
ब्रह्मणिमआत्मामृतत्वाय ॥ पितृपूर्वकंअपोशनंदत्वा ॥ अमृतोपस्तरणमसि ॥ श्रद्धायांप्राणेनिविष्टोमृतंजुहो
मि ॥ शिवोमाविशाप्रदाहाय ॥ प्राणायस्वाहा ॥ श्रद्धायामपानेनिविष्टोमृतंजुहोमि॥ शिवोमाविशाप्रदाहाय॥
अपानायस्वाहा ॥ श्रद्धायांव्यानेनिविष्टोमृतंजुहोमि ॥ शिवोमाविशाप्रदाहाय ॥ व्यानायस्वाहा ॥ श्रद्धाया
मुदानेनिविष्टोमृतंजुहोमि ॥ शिवोमाविशाप्रदाहाय ॥ उदानायस्वाहा ॥ श्रद्धायाँसमानेनिविष्टोमृतंजु
होमि ॥ शिवोमाविशाप्रदाहाय ॥ समानायस्वाहा ॥ ब्रह्मणेस्वाहा ॥ हस्तोदकंपितृपूर्वाणिदत्वा ॥ त्रि ॥१०४॥
सुपर्णपठिला ॥ अपेक्षितंयाचितव्यंश्राद्धार्थकल्पितंहविः ॥ उपविश्यसुखेनैवभोक्तव्यंस्वस्थमानसैः ॥
विद्यमानशाकपाकेषुयद्रोचतेतद्ग्राह्यंयन्नरोचतेतत्त्याज्यं ॥ यथासुखंजुषध्वं ॥ तथा ॥ राक्षोघ्नसूक्तानिपितृ

सूक्तानिश्रावयिष्ये ॥ आश्रावय॥सूक्तानिपठेत् ॥ गायत्रीजपंकुर्यात् ॥ भोजनांते ॥ सिद्धस्यहविषोमध्ये यद्रोचतेतद्याचयध्वं ॥ अलं ॥ मधुमतीःश्रावयिष्ये ॥ श्रावय ॥ मधुवाताऋतायतेमधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ मधुमान्नोवनस्पति र्मधुमाꣳअस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ अपसव्यं ॥ अक्षन्नमीमदंतह्यवप्रियाअधूषत ॥ अस्तोष तस्वभानवोविप्रानविष्ठयामतीयोजान्विंद्रतेहरी ॥ श्राद्धंसंपन्नं ॥ सुसंपन्नं ॥ सव्यं ॥ विश्वेदेवाःतृ प्तास्थ ॥ तृप्ताःस्मः ॥ अपसव्यं ॥ पित्रादयःतृप्तास्थ ॥ तृप्तास्मः ॥ शेषमन्नंकिंक्रियतां ॥ इष्टैःसहभु ज्यतां ॥ सव्यं ॥ असोमपाश्चयेदेवायज्ञभागविवर्जिताः ॥ तेषामन्नंप्रदास्यामिविकिरंवैश्वदेविकं ॥ देव पात्राग्रेअन्नंविकिरेत् ॥ असोमपेभ्योविश्वेभ्योदेवेभ्यः ॥ इदंविकिरान्नंदत्तंनमम ॥ अपसव्यं ॥ असंस्कृ तप्रमीतायेत्यागिन्योयाःकुलस्त्रियः ॥ दास्यामितेभ्योविकिरमन्नंताभ्यश्चपैतृकं ॥ येकुमारायाःकुमारोयेचग र्भाद्विनिःसृताः ॥ तेषामन्नमिदंदत्तंतृप्यंतुचमदंतुच॥पितृपात्रेकुमारकुमारिकेभ्यःइदंप्रकिरान्नंदत्तंनमम ॥ येअग्निदग्धायेअनग्निदग्धाजीवाजाताःकुलेमम ॥ भूमौदत्तेनपिंडेनतृप्तायांतुपरांगतिं ॥ अग्निदग्धेभ्यःअन ग्निदग्धेभ्यःअस्मत्कुलप्रसूतेभ्योजीवेभ्यःउच्छिष्टपिंडःस्वधा ॥ पाणिपादौप्रक्षाल्य॥ पवित्रेविसृज्य ॥ सव्यं॥ आचम्यपुनःपवित्रेधृत्वा ॥ उच्छिष्टभाग्भ्योन्नंदीयतां ॥ यजमानकुलेजातादासादास्योन्नकांक्षिणः ॥ ते

 सर्वेतृप्तिमायांतुमयादत्तेनभूतले ॥ अमृत।पिधानमसि ॥ श्रद्धायांप्राणेनिविश्याम्रृतं ँ हुतं ॥ प्राणमन्नेना 
 प्यायस्व ॥ श्रद्धायामपानेनिविश्याम्रृतं ँ हुतं ॥ अपानमन्नेनाप्यायस्व ॥ श्रद्धायांव्यानेनिविश्याम्रृतं ँ हु
तं ॥ व्यानमन्नेनाप्यायस्व ॥ श्रद्धायामुदानेनिविश्याम्रृतं ँ हुतं ॥ उदानमन्नेनाप्यायस्व ॥ श्रद्धायां ँ स
मानेनिविश्याम्रृतं ँ हुतं ॥ समानमन्नेनाप्यायस्व ॥ अंगुष्ठमात्रः पुरुषोंगुष्ठंचसमाश्रितः ॥ ईशः सर्वस्यज
गतः प्रभुः प्रीणातिविश्वभुक् ॥ रौरवेपूयानिलयेपद्मार्बुदनिवासिनां ॥ अर्थिनामुदकंदत्तंह्यक्षय्यमुपतिष्ठतु ॥
अमुकश्राद्धेपिंडप्रदानंकरिष्ये ॥ कुरुष्व ॥ अपसव्यं ॥ सव्यंजान्वाच्य ॥ अपहताअसुरारक्षा ँ सिवे
दिषदः ॥ दर्भेणलेखांलिखति ॥ तामभ्युक्ष्य ॥ सकृदाच्छिन्नैर्दर्भैरवस्तीर्य ॥ सकृदाछिन्नंबर्हिरूर्णाम्रदुस्यो
नंपितृभ्यस्त्वाभराम्यहं ॥ अस्मिन्त्सीदंतुमेपितरः सोम्याः पितामहाः प्रपितामहाश्चानुगैः सह ॥ तेषुदर्भेष्वा
सीनांजलिनात्रिरुदकांनिनयति ॥ मार्जयंतांपितरः सोम्यासोमार्जयंतांपितामहाः सोम्यासोमार्जयंतांप्रपिता
महाः सोम्यासः मार्जयंतांसर्वेपितरः ॥ एतत्तेअस्मत्पितः शर्मन् ॥ गोत्रवसुरूपयेचत्वामनु ॥ पित्रेशर्मणे 
गोत्रायवसुरूपायअयंपिंडः स्वधा ॥ गयास्थोदत्तोनमम ॥ तेभ्यश्चगयायांदत्तमस्तु ॥ एवंपितामहप्रपिता
महयोः तीर्थेमहालयेच ॥ एतत्तेअस्मन्मातः अमुकदेगोत्रेवसुरूपेयाश्चत्वामनुअस्मत्मात्रेदायैगोत्रायैवसुरूपा

येअयंपिंडःस्वधा॥ गयास्थोदत्तोनममताभ्यश्चगयायांदत्तमस्तु ॥ यथापितामहीप्रपितामह्योः एवंमातामह
सहपत्नीकस्त्रीपुत्रकन्यापितृव्यमातुलभ्रातृपितृभगिनीमातृभगिनीआत्मभगिन्योधवापत्ययुक्ताः श्वशुरगु
रुशिष्याप्ताःतीर्थेमहालयेच॥आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः॥ वंशद्वयेस्मिन्ममदासभू
ताभृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणिसख्युःपशवश्चवृक्षादृष्टाश्चपृष्टाश्चकृतोपकाराः ॥ जन्मांतरयेम
मसंगताश्चतेभ्यःस्वधापिंडमहंददामि ॥ १ ॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबंधूनांयेचा
न्येबांधवाःस्मृताः ॥ येमेकुलेलुप्तपिंडाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥
विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेनहि ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ २ ॥ असीपत्रवनेघोरे
कुंभीपाकेचयेगताः ॥ तेषामुद्धरणार्थायइमंपिंडंददाम्यहं ॥ ३ ॥ उच्छिन्नःकुलवंशयानांयेषांदाताकुलेन
हि ॥ धर्मपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु ॥ ४ ॥ शमीपत्रप्रमाणेनपिंडंदद्याद्गयाशिरे ॥ उद्धरेत्सप्तगोत्रा
णिकुलमेकोत्तरंशतं ॥ अत्रपितरोमादयध्वं ॥ ओष्मणोव्यावृतउपास्तेस्वाहोष्मणोव्यथिष्यै ॥ इत्यूष्माण
मुधंतमनुमंत्रयते ॥ आंक्ष्वासावांक्ष्वासावितित्रिरांजनं ॥ पितःशर्मन्गोत्रवसुरूपअंक्ष्व ॥ एवंपितामहा
दिएवंअभ्यंक्ष्व ॥ अभ्यंक्ष्वासावभ्यंक्ष्वासावितित्रिरभ्यंजनं ॥ एतानिवःपितरोवासा ऽ स्यतोनोन्यत्पितरोमा
यूर्द्वंदशासूत्रंस्वधा ॥ ततःसव्येनपिंडपूजांकरिष्ये ॥ युक्तंलपसव्येन॥पिंडसंस्थाःपितरःपाद्यंस्वधा ॥ अ
र्घ्यं ॥ आचमनीयं ॥ स्नानं॰ वस्त्रं॰ गंधं॰ पुष्पं॰ धूपं॰ दीपं॰ नैवेद्यं॰ तांबूलं॰ दक्षिणा॰ फलं॰ ॥ ऊर्जस्वती

स्वधयावंदमानास्तावोगच्छंतिपितरःस्योनाः ॥ ऊर्जंवहंतीःसततमक्षिकोदकाःक्षीरमुदकंघृतंमधुमयःकीला 
लंपरिस्रुतꣳस्वधास्छतर्पयतमेपितॄन् ॥ इतिलेपोदकंअप्रदक्षिणंपिंडोपरिक्षिपेत् ॥ अथोपतिष्ठते ॥ अप
 सव्यं ॥ नमोवःपितरोरसायनमोवःपितरःशुष्मायनमोवःपितरोजीवायनमोवःपितरःस्वधायनमोवःपितरोम
न्यवेनमोवःपितरोघोरायपितरोनमोवोयएतास्मिंल्लोकेस्छयुष्माꣳस्तेनुयेस्मिंल्लोकेमांतेनुयएतास्मिंल्लोकेस्छयू
यंतेषांवसिष्ठाभूयास्तयेस्मिंल्लोकेहंतेषांवसिष्ठोभूयासं ॥ आपोमधुमतीरिमाःस्वधांपितृभ्योअमृतंदुहानाः ॥
आपोदेवीरुभयाꣳस्तर्पयंतुनदीरिमाउदन्वतीर्वेतस्विनीःसुतीर्थ्याअमुष्मिंल्लोकउपवःक्षरंतु ॥ आपोदेवीः
स्वधयावंदमानास्तावोगच्छंतुपितरःस्योनाः॥ऊर्जंवहंतीःसततमक्षिकोदकाःक्षीरमुदकंघृतंमधुपयःकीलालंप
रिस्रुतꣳस्वधास्छतर्पयतमेपितॄन् ॥ इतिमंत्रःपूर्ववत् ॥ अयंमंत्रोवाअपसव्यंपरिषिच्य ॥ ततःपाणीव्यत्य
स्यदक्षिणमुत्तरमुत्तरंचदक्षिणं ॥ परेतपितरःसोम्यागंभीरैःपथिभिःपूर्व्यैः ॥ अथापितॄन्सुविदत्राꣳअपीत
यमेनयेसधमादंमदंति ॥ मनोन्वाहुवामहेनाराशꣳसेनस्तोमेनपितॄणांचमन्मभिः ॥ आनएतुमनःपुनःक्र
त्वेदक्षायजीवसे ॥ ज्योक्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातꣳसचेमहि ॥ यदं 
तरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहिꣳसिम ॥ अग्निर्मातस्मादेनसःप्रमुंचतुदुरितायानिचकृमकरोतु

मामंनेनसं ॥ इतिपिंडान्प्रचाल्य ॥ सर्वेनमस्कृत्य ॥ ततःसव्येनब्राह्मणहस्तेशिवाआपःसंतु ॥ संतुशिवा आपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ अक्षतंचारिष्टंचास्तु ॥ अस्त्वक्षतमरिष्टंच ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्तु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्च ॥ अपसव्येनपितृहस्तेशिवाआपःसंतु ॥ संतुशिवाआपः ॥ सौमनस्यमस्तु ॥ अस्तुसौमनस्यं ॥ तिलाःपांतु ॥ पांतुतिलाः ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्चास्त्वितिभवंतोब्रुवंतु ॥ दीर्घमायुःश्रेयःशांतिःपुष्टिस्तुष्टिश्च ॥ सव्यं ॥ अस्यश्राद्धयज्ञाख्यस्यकर्मणःप्रतिष्ठाफलसंसिद्ध्यर्थंदेवानांसुवर्णंपितॄणांरजतंव्यवहारिकद्रव्यंस्थानोपविष्टेभ्यःब्राह्मणेभ्यःइमांदक्षिणांतुभ्यमहंसंप्रददे ॥ दक्षिणाःपांतु ॥ पांतुदक्षिणाः ॥ अपसव्यं ॥ अस्मत्पितृपितामहप्रपितामहानांशर्मणांगोत्राणांवसुरुद्रा० एवंमात्रादिषष्ठ्यंतमुक्त्वायद्दत्तंअपरपक्षिकश्राद्धीयमन्नमुदकादितदक्षय्यमस्त्वितिभवंतोब्रुवंतु ॥ अस्त्वक्षय्यं ॥ सव्यं ॥ धूरिलोचन० यद्दत्तंकन्यागते० श्राद्धीयमन्नमुदकादितदक्षय्यम० ॥ अस्त्वक्षय्यं ॥ अपसव्यं ॥ ऋचेत्वारुचेत्वासमित्स्रवंतिसरितोनधेनाः ॥ अंतर्हृदामनसापूयमानाः ॥ घृतस्यधाराअभिचाकशीमि ॥ हिरण्ययोवेतसोमध्यआसां ॥ तस्मिन्सुपर्णोमधुकृत्कुलायीभजन्नास्तेमधुदेवताभ्यः ॥ तस्यासतेहरयःसप्ततीरेस्वधांदुहानाअमृतस्यधारां ॥ पिंडोपरिजलधारांकृत्वा ॥ पित्रादिसमस्तपितृगणेभ्यःस्वधोच्यतां ॥ अस्तुस्वधा ॥ स्वधासंपद्यंतामितिभवंतोब्रुवंतु ॥ संपद्यंतांस्वधा ॥

हि० प्र० सव्यं ॥ अग्निपुरोगाविश्वेदेवाःप्रीयंतामितिभवंतो० ॥ प्रीयंतांविश्वेदेवाः ॥ अपसव्यं॥वसुपुरोगाःपित्रादिसर्वे श्रा० प्र०

पितरःप्रीयंतामितिभवंतोब्रुवंतु ॥ प्रीयंतांपितरः ॥ सव्यं॥सर्वेस्वस्तिभवंतोब्रुवंतु॥ आयुष्मतेस्वस्ति ॥

॥२०७॥ शोभनंहविः ॥ आत्मालंकाराः ॥ शाकपाकाःपितरःप्रियाः ॥ देवपितॄणामग्रेसहैवगोत्राशिषःप्रार्थयिष्ये॥

प्रार्थय ॥ विप्रहस्तेअक्षतान्दद्यात् ॥ अघोराःपितरःसंतु ॥ गोत्रंवर्धतां ॥ दातारोनोभिवर्धतांवेदाःसंततिरे

वनः ॥ श्रद्धाचनोमाव्यगमत् ॥ बहुदेयंचनोस्तु ॥ अन्नंचनोबहुभवेत् ॥ अतिथींश्चलभेमहि ॥ याचि

तारश्चनःसंतु ॥ माचयाचिष्मकंचन ॥ इतिप्रार्थ्य ॥ दातारोवोभिवर्धतां ॥ वेदाःसंततिरेववः ॥ श्रद्धा

चवोमाव्यगमत् ॥ बहुदेयंचवोस्तु ॥ अन्नंचवोबहुभवेत् ॥ अतिथींश्चलभध्वं ॥ याचितारश्चवःसंतु ॥

माचयाचिढ्वंकंचन ॥ स्वस्तिगोत्रंगोत्रस्याभिवृद्धिरस्तु ॥ एताःसत्याआशिषःसंतु ॥ देवपितरप्रसादो

स्तु ॥ गयाकृतश्राद्धमस्तु ॥ इतिब्राह्मणाःपठित्वा ॥ पिंडानुद्वासयिष्ये ॥ उद्वासय ॥ तद्विष्णोःपरमं

पदꣳ सदापश्यंतिसूरयः ॥ दिवीवचक्षुराततं॥तद्विप्रासोविपन्यवोजागृवांसःसमिंधते ॥ विष्णोर्यत्परमंप ॥२०७॥

दं ॥ अयोध्यामथुरामायाकाशीकांचीअवंतिका ॥ पुरीद्वारावतीचैवसप्तैतामोक्षदायकाः ॥ पिंडस्थानेशां

तिःपुष्टिस्तुष्टिश्चास्तु ॥ पिंडस्थानेशांतिःपुष्टिस्तुष्टिश्च ॥ स्वस्थानेवासः ॥ देवान्पितॄन्सहैवविसर्जयि

ष्ये ॥ विसर्जय ॥ वाजेवाजेवतवाजिनोनोधनेषुविप्राअमृताऋतज्ञाः ॥ अस्यमध्वः पिबतमादयध्वंतृप्तायां तपथिभिर्देवयानैः ॥ उत्तिष्ठंतुपितरः ॥ सव्येनविश्वेदेवैःसह ॥ आमावाजस्यप्रसवोजगम्यादाद्यावापृथिवीविश्वरूपे ॥ आमागंतांपितरामातराचामासोमोअमृतत्वायगम्यात् ॥ स्वादुषंसदःपितरोवयोधाः कृच्छ्रेश्रितःशक्तीवंतोगभीराः ॥चित्रसेनाइषुबलाअमृध्राःसतोवीराउरवोव्रातसाहाः ॥ ब्राह्मणासःपितरःसोम्यासःशिवेनोद्यावापृथिवीअनेहसा ॥ पूषानःपातुदुरितादृतावृधोरक्षामाकिर्नोअघशंसईशत ॥ ब्राह्मणाः ॥ इहैवस्तंमावियौष्टंविश्वमायुर्व्यश्नुतं ॥ क्रीळंतौपुत्रैर्नप्तृभिर्मोदमानौस्वेगृहे ॥ आयुःप्रजांधनंविद्यां स्वर्गमोक्षंसुखानिच ॥ प्रयच्छंतुतथाराज्यंपितान्नृणांपितामहाः ॥ एताःसत्याआशिषःसंतु ॥ श्राद्धंगयाकृतश्राद्धमस्तु ॥ पितॄणामक्षय्यातृप्तिरस्तु ॥ यजमानः ॥ अद्यमेसफलंजन्मभवत्पादाब्जवंदनात् ॥ अद्यमे वंशजाःसर्वेयातावोनुग्रहाद्दिवं ॥ यत्तुशाकादिदानेनक्लेशितायूयमीदृशाः ॥ तत्क्लेशजातंचित्तस्थंविस्मृत्यक्षंतुमर्हथः ॥ विस्मृत्यक्षमामः ॥मंत्रहीनंक्रियाहीनंभक्तिहीनंद्विजोत्तमाः ॥ श्राद्धंसंपूर्णतांयातिप्रसादाद्भवतां मम ॥ श्राद्धंसंपूर्णमस्तु ॥ यःकश्चिच्छ्राद्धयज्ञस्यप्रोक्तोमन्वादिभिर्विधिः ॥ असौयुष्मत्प्रसादेनसंपूर्णःसकलोस्तुमे ॥ अस्तुसंपूर्णःसकलःशेषोप्यस्ति ॥ हूयतां ॥ इष्टैःसहभुज्यतां ॥ वसिष्ठासःपितृवद्वाचमक्रतदे

वांईळांनाकृषिवत्स्वस्तये॥प्रीताईवज्ञातयःकाममेत्यास्मेदेवासोवधूनुतावसु ॥ देवान्वसिष्ठोअमृतान्ववंदेये
विश्वाभुवनाभिप्रतस्थुः ॥ तेनोरासंतामुरुगायमद्ययूयंपातस्वस्तिभिःसदानः ॥ इदंपितृभ्योनमोअस्त्वद्येति
नमस्कारवतीमंततःशंसतितस्मादंततःपितृभ्योनमस्क्रियतेतदाहुर्व्याहावंपित्र्याःशंसेत्अव्याहावांइति ॥ व्या
हावमेवशंसेदसंस्थितंवैपितृयज्ञस्यसाध्वसंस्थितंवाएषपितृयज्ञंसंस्थापयतियोव्याहावंशंसातितस्माद्व्याहावमे
वशंस्तव्यं ॥ होतास्वएवास्मांआयतनइंद्रियंवीर्यमवरुंधेद्वादशोपदधातिद्वादशाक्षराजगतीजागताःपशवो
जगत्यैवास्मैपशूनवरुंधेष्टावष्टावन्येषुधिष्णियेषूपदधात्यष्टाशफाःपशवःपशूनेवावरुंधेषण्मार्जालीयेषड्वाऋत
वऋतवःखलुवैदेवाःपितरऋतूनेवदेवापितृन्प्रींणाति ॥ जपच्छिद्रंतपच्छिद्रंयच्छिद्रंश्राद्धकर्मणि॥सर्वंभवतुमे
छिद्रंब्राह्मणानांप्रसादतः ॥ सर्वमच्छिद्रंभवतु ॥ एषपितृयज्ञःतत्सद्ब्रह्मार्पणमस्तु ॥ तर्पणंकुर्यात् ॥
स्वयंभुंजीत ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १०४ ॥ ॥ अभिश्रवणसूक्तप्रारंभः ॥

श्रीगणेशायनमः ॥ ॐ युंजतेमनउतयुंजतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदे
कइन्महीदेवस्यसवितुःपरिष्टुतिः ॥ सुवाग्देवदुर्या ँ आवदद्देवश्रुतौदेवेष्वाघोषेथामानोवीरोजायतांकर्म

॥२०८॥

न्योय ~ सर्वैनुजीवामयोबहूनामसंद्वशी ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं ॥ समूढमस्यपा ~ सुरइरावती
धेनुमतीहिभूत ~ सूयवसीनीमनवेदशस्ये ॥ व्यस्कभ्नाद्रोदसीविष्णुरेतेदाधारपृथिवीमभितोमयूखैः ॥
प्राचीप्रेतमध्वरंकल्पयंतीऊर्ध्वयज्ञंनयतमाजीव्हरतमत्रंरमेथांवर्ष्मन्पृथिव्यादिवोवाविष्णवुतवापृथिव्यामहो
वाविष्णवुतवांतरिक्षात्धस्तौपृणस्वबहुभिर्वसव्यैराप्रयच्छदक्षिणादोतसव्यात्॥ विष्णोर्नुकंवीर्याणिप्रवोचंयः
पार्थिवानिविममेरजा ~ सियोअस्कभायदुत्तर ~ सधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णोररराटमसिविष्णोःपृष्ठ
मसिविष्णोश्नप्त्रेस्थोविष्णोस्यूरसिविष्णोध्रुवमसिवैष्णवमसिविष्णवेला ॥१॥ कृणुष्वपाजःप्रसितिंनपृथ्वीं
याहिराजेवामवा ~ इभेन ॥०॥ रक्षोहणोवलगहनोवैष्णवान्खनामीदमहंतंवलगमुद्वपामियन्नःसमानोयम
समानोनिचखानेदमेनमधरंकरोमियोनःसमानोयोसमानोरातीयतिगायत्रेणच्छंदसावबाढोवलगः किमत्रभद्रं
तन्नौसहविराडसिसपत्नहासम्राडसिभ्रातृव्यहास्वराडस्यभिमातिहाविश्वाराडसिविश्वासांनाष्ट्राणां ~ हंता
रक्षोहणोवलगहनःप्रोक्षामिवैष्णवान्रक्षोहणोवलगहनोवनयामिवैष्णवान्यवोसियवयास्मद्द्वेषोयवयारातीर
क्षोहणोवलगहनोवस्तृणामिवैष्णवान्रक्षोहणोवलगहनोभिजुहोमिवैष्णवान्रक्षोहणौवलगहनावुपदधामि
वैष्णवीरक्षोहणौवलगहनौपर्यूहामिवैष्णवीरक्षोहणौवलगहनौपरिस्तृणामिवैष्णवीरक्षोहणौवलगहनौवैष्ण

वीबृहन्नसिबृहन्नावाबृहतीमिंद्रायवाचंवद ॥२॥ सामायोपतृमेतपुरोडाश ं षट्कपालंनिर्वपतिपितृभ्योब
र्हिषद्भ्योधानाःपितृभ्योग्निष्वात्तेभ्योभिवान्यायैदुग्धेमंथमेतत्तेततयेचत्वामन्वेतत्तेपितामहप्रपितामहयेचत्वा
मन्वत्रपितरोयथाभागंमंदध्व ं सुसंदृशंत्वावयंमघवन्मंदिषीमहि ॥ प्रनूनंपूर्णवंधुरस्तुतोयासिवशा ं अनु॥
योजान्विंद्रतेहरी ॥ अक्षन्नमीमदंतह्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामती ॥ योजा
न्विंद्रतेहरी ॥ अक्षन्पितरोमीमदंतपितरोतीतृपंतपितरोमीमृजंतापितरः ॥ परेतपितरःसोम्यागंभीरैःपथिभिः
पूर्व्यैः ॥ अथापितॄ ं सुविदत्रा ं अपीतयमेनयेसधमादंमदंति ॥ मनोन्वाहुवामहेनाराश ं सेनस्तोमेन
पितॄणांचमन्मभिः ॥ आनएतुमनःपुनःक्रत्वेदक्षायजीवसे ॥ ज्योक्चसूर्यंदृशे ॥ पुनर्नःपितरोमनोददातु
दैव्योजनः ॥ जीवंव्रात ं सचेमहि ॥ यदंतरिक्षंपृथिवीमुतद्यांयन्मातरंपितरंवाजिहि ँ सिम ॥ अग्निर्मा
तस्मादेनसोगार्हपत्यःप्रमुंचतुदुरितायानिचकृमकरोतुमामनेनसं ॥ ४ ॥ उशंतस्त्वाहवामहउशंतःसमिधी
महि ॥ उशन्नुशतआवहपितॄन्हविषेअत्तवे ॥ त्व ँ सोमप्रचिकितोमनीषात्व ँ रजिष्ठमनुनेषिपंथां ॥ तव
प्रणीतीपितरोनइंदोदेवेषुरत्नमभजंतधीराः ॥ त्वयाहिनःपितरःसोमपूर्वेकर्माणिचक्रुःपवमानधीराः॥वन्वन्न

वांतःपरिधी ँ रपोर्णुवीरेभिरश्वैर्मघवाभवानः ॥ त्व ँ सोमपितृभिःसंविदानोनुद्यावापृथिवीआततंथ ॥ तस्मै
तइंदोहविषाविधेमवय ँ स्यामपतयोरयीणां ॥ अग्निष्वात्ताःपितरएहगच्छतसदःसदःसदतसुप्रणीतयः ॥
अत्ताहवी ँ षिप्रयतानिबर्हिष्यथारयि ँ सर्ववीरंदधातन ॥ बर्हिषदःपितरऊत्यर्वागिमावोहव्याचकृमाजु
षध्वं ॥ तआगतावसाशंतमेनाथास्मभ्य ँ शंयोररपोदधात ॥ आहंपितॄन्सुविदत्रां ँ अवित्सिनपातंचवि
क्रमणंचविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजंतपित्वस्तइहागमिष्ठाः ॥ उपहूताःपितरःसोम्यासोबर्हि
ष्येषुनिधिषुप्रियेषु ॥ तआगमंतुतइहश्रुवंत्वधिब्रुवंतुतेअवंत्वस्मान् ॥ उदीरतामवरउत्परासउन्मध्यमाः
पितरःसोम्यासः ॥ असुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु ॥ इदंपितृभ्योनमोअस्त्वद्ययेपूर्वासोयउपरा
सईयुः ॥ येपार्थिवेरजस्यानिषत्तायेवानूनँ सुवृजनासुविक्षु ॥ अधायथानःपितरःपरासःप्रत्नासोअग्नऋत
मांशुषाणाः ॥ शुचीदयंदीधितिमुक्थशासःक्षामाभिंदंतोअरुणीरपव्रन् ॥ यदग्नेकव्यवाहनापितॄन्यक्ष्यृता
वृधः ॥ प्रचहव्यानिवक्ष्यसिदेवेभ्यश्चपितृभ्यऽआ ॥ त्वमग्नईडितोजातवेदोवाड्ढव्यानिसुरभीणिकृत्वा ॥ प्रा
दाःपितृभ्यःस्वधयातेअक्षन्नद्धित्वंदेवप्रयताहवी ँ षि ॥ मातलीकव्यैर्यमोअंगिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृ
धानः ॥ यां ३ श्चदेवावावृधुर्येचदेवान्त्स्वाहान्येस्वधयान्येमदंति ॥ इमंयमप्रस्तरमाहिसीदांगिरोभिःपितृ

हि०भ्र० भिःसंविदानः ॥ आत्वामंत्राःकविशस्तावहन्त्वेनाराजन्हविषामादयस्व ॥ अंगिरोभिरागहियज्ञियेभिर्यम श्र०सू०
वैरूपैरिहमादयस्व ॥ विवस्वंत ꣳ हुवेवःपितातेस्मिन्यज्ञेबर्हिष्यानिषद्य ॥ अंगिरसोनःपितरोनवग्वाअथर्वा
॥२१०॥ णोभृगवःसोम्यासः॥तेषांवय ꣳ सुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥५॥ भक्षेहिमाविशदीर्घायुत्वायशं
तनुत्वायरायस्पोषायवर्चसेसुप्रजास्त्वायेहिवसोपुरोवसोप्रियोमेहृदोस्यश्विनोस्त्वाबाहुभ्या ꣳ सघ्यासंनृचक्ष
संत्वादेवसोमसुचक्षाअवख्येषंमंद्राविभूतिः ॥ केतुर्यज्ञानांवाग्जुषाणासोमस्यतृप्यतुमंद्रास्वर्वाच्यादितिरनाह
तशीर्ष्णीवाग्जुषाणासोमस्यतृप्यत्वेहिविश्वचर्षणेशंभूर्मयोभूःस्वस्तिमाहरिवर्णप्रचरक्रत्वेदक्षायरायस्पोषाय
सुवीरतायैमामाराजन्विबीभिषोमामेहार्दित्विषावधीः ॥ वृषणेशुष्मायायुषेवर्चसे ॥ वसुमद्गणस्यसोमदेवते
मतिविदःप्रातःसवनस्यगायत्रछंदसइंद्रपीतस्यनराश ꣳ संपीतस्यपितृपीतस्यमधुमतउपहूतस्योपहूतोभ
क्षयामिरुद्रवद्गणस्यसोमदेवतेमतिविदोमाध्यंदिनस्यसवनस्यत्रिष्टुप्छंदसइंद्रपीतस्यनराश ꣳ संपीतस्यपि
तृपीतस्यमधुमतउपहूतस्योपहूतोभक्षयाम्यादित्यवद्गणस्यसोमदेवतेमतिविदस्तृतीयस्यसवनस्यजगतीछंद ॥२१०॥
सइंद्रपीतस्यनराश ꣳ संपीतस्यपितृपीतस्यमधुमतउपहूतस्योपहूतोभक्षयामि ॥ आप्यायस्वसमेतुते
विश्वतःसोमवृष्णियं ॥ भवावाजस्यसंगथे ॥ हिन्वमेगात्राहारिवोगणान्मेमावितीतृषः ॥ शिवोमेसप्तऋषी

नुपतिष्ठस्वमामेवाङ्नाभिमतिंगाः ॥ अपामसोमममृताअभूमागन्मज्योतिरविंदामदेवान् ॥ किमस्मान्कृणवदरातिःकिमुधूर्तिरमृतमर्त्यस्य ॥ यन्मआत्मनोमिंदाभूदग्निःस्तत्पुनराहार्जातवेदाविचर्षणिः ॥ पुनरग्निश्चक्षुरदात्पुनरिंद्रोबृहस्पतिः ॥ पुनर्मेअश्विनायुवंचक्षुराधत्तमक्ष्योः ॥ इष्टयजुषस्तेदेवसोमस्तुतस्तोमस्यशस्तोक्थस्यहरिवतइंद्रपीतस्यमधुमतउपहूतस्योपहूतोभक्षयामि ॥ आपूर्यास्थामापूरयतप्रजयाचधनेनच ॥ एतत्तेततयेचत्वामन्वेतत्तेपितामहप्रपितामहयेचत्वामन्वत्रपितरोयथाभागंमदध्वंनमोवःपितरोरसायनमोवःपितरःशुष्मायनमोवःपितरोजीवायनमोवःपितरःस्वधायैनमोवःपितरोमन्यवेनमोवःपितरोघोरायपितरोनमोवोयएतस्मिंल्लोकेस्थयुष्मांस्तेनुयेस्मिन्लोकेमांतेनुयएतस्मिंल्लोकेस्थयूयंतेषांवसिष्ठोभूयास्तयेस्मिंल्लोकेहंतेषांवसिष्ठोभूयासं ॥ प्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ देवकृतस्यैनसोवयजनमसिमनुष्यकृतस्यैनसोवयजनमसिपितृकृतस्यैनसोवयजनमस्यप्सुधौतस्यसोमदेवतेनृभिःसुतस्येष्टयजुषस्तुतस्तोमस्यशस्तोक्थस्ययोभक्षोअश्वसानिर्योगोसानिस्तस्यतेपितृभिर्भक्षंकृतस्योपहूतस्योपहूतोभक्षयामि ॥ प्रजापतिर्मनसांधोछेतोधातादीक्षायांसविताभृत्यां

पूषासे।मक्रयण्यावरुणउपनद्धोसुरःक्रीयमाणोमित्रःक्रीतशिपिविष्टआसादितोनरंधिषःप्रोह्यमाणोधिपतिराग
तःप्रजापतिःप्रणीयमानोग्निराग्नीध्रेबृहस्पतिराग्नीध्रात्प्रणीयमानइंद्रोहविर्धानेदितिरासादितोविष्णुरुपावह्नि
यमाणोथर्वापोतोयमोभिषुतोपूतपाआधूयमानोवायुःपूयमानोमित्रःक्षीरश्रीमंथीसक्तुश्रीर्वैश्वदेवउन्नीतोरुद्र
आहुतोवायुरावृतोनृचक्षाप्रतिख्यातोभक्षआगतःपितृणांनाराशं सोसुरात्तःसिंधुरवभृथमवप्रयन्त्संमु
द्रोवगतःसलिलःप्रप्लतःसुवरुहज्जंगतः ॥ अग्नेउदधेयातइषुर्युवानामतयानोम्मृडतस्यास्तेनमस्तस्तास्तउप
जीवंतोभूयास्माटेडु० पंचवाएतेग्नयोयच्चितयउदधिरेवनामंप्रथमोदुध्रोद्वितीयोगह्यःस्तृतीयःकिंशिलश्चतु
र्थोवन्यःपंचमः॥शिरोवाएतद्यज्ञस्ययद्धविर्धानंप्राणाउपरवाहविर्धानेखायंतेतस्माच्छीर्षन्प्राणाअधस्तात्खायंते
तस्मादधस्ताच्छीर्ष्णःप्राणारक्षोहणोवलगहनोवैष्णवान्खनामीत्याहवैष्णवाहिदेवतयोपरवाअसुरावैनिर्यतोदे
वानांप्राणेषुवलगान्यखनंतान्बाहुमात्रेन्वविंदन्तस्माद्बाहुमात्राःखायंतइदमहंतंवलगमुद्वपामि ॥ यन्नःसमा
नोयमसमानोनिचखानेत्याहद्वौवावपुरुषायश्चैवसमानोयश्चासमानोययेवास्मैतोवलगंनिखनंतस्तमेवोद्वपाति
संतृणत्तितस्मात्संतृण्णअंतरतःप्राणानसंभिनत्तितस्मादसंभिन्नाःप्राणोअपोवनयतितस्माद्द्राअंतरतःप्राणा
यवंमतीरवनयति ॥उर्ग्वैयवःप्राणाउपरवाःप्राणेष्वेवोर्जंदधातिबर्हिरवस्तृणातितस्माल्लोमशाअंतरतःप्राणाआ

ज्येनव्याघारयतितेजोवाआज्यंप्राणाउपरवाःप्राणेष्वेवतेजोदधातिहनूवाएतेयज्ञस्ययदधिषवणेनसंतृणत्यसंतृ
ण्णेहिहनूअथोखलुदीर्घसोमेसंतृद्येधृत्यैशिरोवाएतद्यदस्ययद्धविर्धानं ॥ प्राणाउपरवाहनूअधिषवणेजिव्हा
चर्मग्रावाणोदंतामुखमाहवनीयोनासिकोत्तरवेदिरुदर ऽ सदोयदाखलुवैजिव्हयादत्स्वधिखादत्यथमुखंग
च्छतियदामुखंगच्छत्यथोदरंगच्छातितस्माद्धविर्धानेचर्मन्नधिग्रावभिरभिषुत्याहवनीयेहुत्वाप्रत्यंचःपरेत्यस
दसिभक्षयंतियोवैविराजोयज्ञमुखेदोहंवेददुहएवैनामियंवैविराट्तस्यैत्वक्चमोदोधिषवणेस्तनाउपरवाग्रावा
णोवत्सोऋत्विजोदुहंतिसोमःपयोयएवंवेददुहएवैनां ॥ असावादित्योस्मिंल्लोकआसीत्तंदेवाःपृष्ठैःपरिगृह्यसुव
र्गंलोकमगमयन्परैरवस्तात्पर्यगृण्हंदिवाकीर्त्येनसुवर्गेलोकेप्रत्यस्थापयन्परैःपरस्तात्पर्यगृण्हन्पृष्ठैरुपावारोह
न्त्सवाअसावादित्योमुष्मिंन्लोकेपरैरुभयतःपरिगृहीतोयत्पृष्ठानिभवंतिसुवर्गमेवतैर्लोकंयजमानायंतिपरैरव
स्तात्परिगृण्हंतिदिवाकीर्त्येन ॥ सुवर्गेलोकेप्रतितिष्ठंतिपरैःपरस्तात्परिगृण्हंतिपृष्ठैरुपावरोहंतियत्परेपरस्तान्न
स्युःपराचःसुवर्गाल्लोकान्निष्पद्येरन्नादवस्तान्नस्युःप्रजान्निर्दहेयुरभितोदिवाकीर्त्यंपरःसामानोभवंतिसुवर्गएवै
नांल्लोकउभयतःपरिगृण्हंतियजमानोवैदिवाकीर्त्य ऽ संवत्सरःपरःसमानोभितोदिवाकीर्त्यंपरःसमानोभवंति

संवत्सरएवोभयतःप्रतितिष्ठंतिपृष्ठंवैदिवाकीर्त्यंपार्श्वेपरःसामानोभितोदिवाकीर्त्यंपरःसमानोभवंतितस्माद
भितःपृष्ठंपार्श्वेभूयिष्ठाग्रहागृह्यंतेभूयिष्ठ ँ हिशस्यतेयज्ञस्यैवतन्मध्यतोग्रंथिंग्रथ्नंत्याविस्र ँ सायसप्तगृह्यंते
सप्तवैशीर्षण्याःप्राणाःप्राणानेवयजमानेषुदधातियत्पराचीनानिपृष्ठानिभवंत्यमुमेवतैर्लोकमभ्यारोहंतियदिमं
लोकंनप्रत्यवरोहेयुरुद्वामाद्येयुर्यजमानाःप्रपामीयेरन्यत्प्रतीचीनानिपृष्ठानिभवंतीममेवतैर्लोकंप्रत्यवरोहंत्य
थोअस्मिन्नेवलोकेप्रतितिष्ठंत्यमुष्मादायेंद्रोअप्रतिष्ठितआसीत्सप्रजापतिमुपाधावत्तस्माएतमेकवि ँ शतिरा
त्रंप्रायच्छत्तमाहरत्तेनायजततत्तोवैसप्रत्यतिष्ठद्येबहुयाजिनोप्रतिष्ठिताःस्युस्तएकवि ँ शतिरात्रमासीरन्द्वादश
मासाःपंचर्तवस्त्रयइमेलोकाअसावादित्यएकवि ँ शएतावंतोवैदेवलोकास्तेष्वेवयथापूर्वंप्रतितिष्ठंत्यसावा
दित्योनव्यरोचतसप्रजापतिमुपाधावत्तस्माएतमेकंत्रमासंतेरोचंतएवैकवि ँ शतिरात्रंप्रायच्छत्तमाहरत्तेना
यजततत्तोवैसोरोचतयएवंविद्वा ँ सएकवि ँ शतिरात्रेभवतिरुग्वाएकवि ँ शोरुचमेवगच्छंत्यथोप्रति
ष्ठामेवप्रतिष्ठाह्येकवि ँ शोतिरात्रावभितोभवतोब्रह्मवर्चसस्यपरिगृहीत्यै॥किँ स्विदासीत्पूर्वचित्तिःकिँ स्विं
दासीद्बृहद्वयः ॥ किँ स्विदासीत्पिशंगिलाकिँ स्विदासीत्पिलिप्पिला ॥ द्यौरासीत्पूर्वचित्तिरश्वआसीद्बृ
हद्वयः ॥ रात्रिरासीत्पिशंगिलाविरासीत्पिलिप्पिला ॥ कःस्विदेकाकीचरतिकउस्विज्जायतेपुनः ॥ किँ

स्विद्धिमस्यंभेषजंकिᳪस्विदावपंनंमहत् ॥ सूर्यंएकाकीचंरतिचंद्रमांजायतेपुनंः ॥ अग्निर्हिमस्यंभेषजंभूमिरावपंनंमहत् ॥ पृच्छामित्वापरमंतंपृथिव्याःपृच्छामित्वाभुवंनस्यनाभिं ॥ पृच्छामित्वदृष्णोअश्वंस्यरेतंः पृच्छामिंवाचःपंरमंव्योम ॥ वेदिंमाहुःपरमंतंपृथिव्यायज्ञमाहुर्भुवंनस्यनाभिं ॥ सोमंमाहुर्वृष्णोअश्वंस्यरेतो ब्रह्मैववाचःपंरमंव्योम ॥ आब्रह्मन्ब्राह्मणोब्रंह्म० ॥

## ॥ १०५॥ ॥ अथ आमश्राद्धविधिप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथआमश्राद्धविधिप्रारंभः ॥ तत्रकेनचित्संकटेनपाकासंभवेजातकर्मणिचग्रहणनिमित्तकश्राद्धेचामश्राद्धंकार्यं ॥ सपिंडीश्राद्धंमासिकंप्रतिवार्षिकंमहालयाष्टकादि श्राद्धंचामेनकार्यं ॥ शूद्रस्यतुदशाहपिंडादिश्राद्धमात्रमामेननकदापिपाकेनतत्रपितॄनुद्दिश्यामुकश्राद्धंसदैवंसापिंडमामेनहाविषा करिष्ये ॥ इतिसंकल्पः ॥ अन्य : प्रयोग : पूर्वोक्तएव ॥ पाकप्रोक्षणस्थानेआमप्रोक्षणं ॥ आवाहनेउशंतस्त्वेतिमंत्रेहविषेअत्तवेइत्यत्रहविषेस्वीकर्तवेइत्यूहः ॥भस्ममर्यादांतंप्राग्वत्॥विप्रहस्तेषुतंडुलैरग्नौकरणं॥अन्नाच्चतुर्गुणंद्विगुणंसमंवातत्तदामंपात्रेषुसंस्थाप्यपाणिहोमशेषंपिंडार्थंसंस्थाप्यपात्रेषुदत्वापृथ्वीतेपात्रमित्यादि • इदमामंहव्यंकव्यमित्यादिइदमाममम्मृतरूपंस्वाहेत्यादियथाधर्ममध्वित्यंतंप्राकृतंयथासुखंजुषध्वमित्य

स्यापोशानप्राणाहुतितृप्तिप्रश्नानांलोपः संपन्नवाचनांतेन्नशेषप्रश्नलोपः सर्वमतेतंडुलैःसक्तुभिर्वापिंडदानं
केचिद्गृहासितधान्येनपायसेनवापिंडदानमाहुः ॥ एवंविप्रसमीपेपिंडदानांतेनमोवःपितरइषेइत्यत्रोपस्थानमं
त्रेइषेस्थानेआमद्रव्यायेत्यूहः पिंडोद्वासनांतेपिंडजातीयद्रव्येणविकिरदानंआमश्राद्धेस्वस्तीतिब्रूतेतिवर्ज्यंवा
जेवाजेइतिमंत्रेतृप्तायातेतिस्थानेतर्पिष्यमाणायातेत्यूहः ततःप्राग्वच्छेषंसमापयेत् ॥ आमश्राद्धंद्विजैःपूर्वाह्णे
कार्यंशूद्रैरपराह्णएवआमान्नाभावेहिरण्यश्राद्धमप्येवमेवसंकल्पादौहिरण्यपदमामस्थानेयोज्यं ॥ आमवद्धेम
प्रोक्षणं अत्तव इत्यादिमंत्रत्रयेोहः प्राग्वदेव तंडुलादिभिर्हस्तेग्नौकरणंहिरण्यमन्नादष्टगुणं चतुर्गुणंद्विगुणंस
मंवादेयंहिरण्यश्राद्धेपिदक्षिणास्त्येवश्राद्धीयमामंहेमंवाद्विजदत्तंयथेष्टंविनियोज्यं शूद्रदत्तंतुभोजनादन्यत्र
विनियोज्यं श्राद्धीयामेनपंचयज्ञाःश्राद्धंचनकार्यं ॥ १ ॥ हेमश्राद्धेआमश्राद्धेचपिंडदानविकल्पात्सांक
ल्पविधिनाप्येतद्वयं ॥ सांकल्पिकेचसमंत्रकावाहनार्घ्याग्नौकरणपिंडदानविकिराक्षय्यस्वधावाचनप्रश्नाइ
त्येतत्सप्तकंवर्ज्यं ॥ तत्रामकश्राद्धंआमेनहविषाहिरण्येनवासांकल्पविधिनाकरिष्यइतिसंकल्पः ॥ शूद्रगृहे
ऽन्यदीयमपिक्षीराद्यपिनभक्ष्यंकिमुतदीयमामादितद्गृहेपक्वान्नंनभोक्ष्यमिति ॥ तस्माच्छूद्राल्लब्धंचगृहेपक्का
भक्ष्यं ॥ इत्यामश्राद्धविधिःसमाप्तः ॥ ॥ ॥ ॥ ॥ ७ ॥ ॥७॥

## ॥ १०६ ॥ ॥ अथ भरणीश्राद्धनिर्णयप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथभरणीश्रात्धनिर्णयप्रारंभः ॥ तत्रापरपक्षेभरणीश्राद्धाद्रयाप्राप्तिः ॥ भरणीश्रात्धमपिंडकंषट्दैवतंसांकल्पविधिनाकार्यंदेवाधूरिलोचनौपुरूरवार्द्रौवाभरणीश्रात्धंकाम्यंगयाश्रात्धफलकामेनप्रतिवर्षंकार्यं ॥ केचित्प्रित्रादिमरणोत्तरंप्रथमवर्षेएवकुर्वंति द्वितीयादिवर्षेनकुर्वंतितत्रमूलंचिंत्यं॥ममतुनदैवंनापिवापिञ्यंयावत्पूर्णोनवत्सरइत्याद्युक्त्यासर्वस्यापिदर्शादिश्रात्धस्यप्रथमाब्देनिषेधाद्वर्षांतएवपितृत्वप्राप्तेश्चद्वितीयादिवर्षएवकर्तुंयुक्तमितिभाति ॥यत्तुपितृभिन्नोयोयोम्रियतेतस्यप्रथमाब्देभरणीश्रात्धंक्रियतेतत्रापिमूलंनपश्यामः॥गयाश्राद्धफलार्थमाचारमनुस्मृत्य।क्रियतेचेत्मृताद्येकमेवपार्वणमुद्दिश्यसदैवंकार्यं अद्यदेशकालौस्मृत्वाद्यपूर्वोच्चारितएवंगुणविशेषणवि॰ प्राप्त्यर्थंगयाश्रात्धफलप्राप्त्यर्थंभरणीश्राद्धंकरिष्ये इतिसंकल्पः शेषंसांकल्पविधिनैवकार्यं ॥ ॥ इति भरणीश्राद्धनिर्णयविधिःसमाप्तः ॥ छ ॥

## ॥ १०७ ॥ ॥ अथ अक्षय्यतृतीयायुगादिश्राद्धनिर्णयविधिप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथअक्षय्यतृतीयानिर्णयविधिप्रारंभः ॥ अस्यांतृतीयायांयत्किंचिज्जपहोमपितृतर्पणंदानादिचाक्रियतेतत्सर्वमक्षयं इयंरोहिणीबुधयोगेमहापुण्या अस्यांजपहोमादिकृत्येपिवक्ष्यमाणयुगादिवन्निर्णयः इयंकृतयुगस्यादिः अत्रयुगादिश्राद्धमपिंडकमनुष्ठेयं श्राद्धासंभवेतिलतर्पणमप्यत्रकार्यं तत्रासं

भवेऽपराह्णेपि कृष्णयुगादिकार्यंत्वपराह्णइत्यादिमन्वादिप्रकरणोक्तनिर्णयः ॥द्वेधाविभक्तंदिनपूर्वार्धैकदेशव्या
पिनीदिनद्वयेचेत्त्रिमुहूर्ताधिकव्याप्तिसत्वेपरात्रिमुहूर्तान्न्यूनत्वेपूर्वामन्वादौचयुगादौचग्रहणेचंद्रसूर्ययोः॥व्यती
पातेवैधृतौचतत्कालव्यापिनीक्रियेतिवचनेनसाकल्यव्याप्तिवाक्यानांअपवादात् श्राद्धादिकंचतृतीयामध्येए
वकर्तव्यं ॥ पुरुषार्थचिंतामणौतुसप्तमाष्टमनवमुहूर्तानांगांधर्वकुतुपरौहिणसंज्ञकानांयुगादिश्राद्धकालत्वात्
शुक्लेमध्यमदिनमानेत्रयोदश्यादिपंचदश्यंतघटित्रयव्यापिन्यांश्राद्धंकृष्णेतुषोडशीमारभ्यघटिकात्रयेउभयत्र
तादृशघटित्रयव्याप्तौसत्यामसत्यांवाशुक्लापरायदातुपरेद्युस्त्रयोदशघटितः पूर्वसमाप्तापूर्वेद्युस्त्रयोदश्यादिघटि
त्रयेतदेकदेशेवाविद्यतेतदाकर्मकालशास्त्रबाहुल्यात्पूर्वैवग्राह्येत्युक्तंइदमेवयुक्तमितिभाति॥अत्रदेवतोद्देशेनापि
त्र्युद्देशेनचोदकुंभदानमुक्तं॥ तत्रसंकल्पः॥श्रीपरमेश्वरप्रीत्यर्थंवसंतमाधवदेवताप्रीत्यर्थंपितृप्रीत्यर्थं चब्राह्मणा
योदकुंभदानमहंकरिष्ये ॥ तदंगकुंभपूजनंचकरिष्ये ॥ इतिसंकल्प्यसूत्रवेष्टितंगंधफलयवाद्युपेतंकलशंपं
चोपचारैर्ब्राह्मणंचसंपूज्य ॥ तत्रमंत्रः ॥ एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः ॥ अस्यप्रदानात्सकलाममम
संतुमनोरथाइतिमंत्रेणदद्यात् ॥ पित्र्युद्देशेतुपितृणामक्षय्यतृप्त्यर्थंउदकुंभदानंकरिष्येइतिसंपूज्योदकुंभब्राह्म
णौसंपूज्योदकुंभेगंधतिलफलादिनिक्षिप्य॥एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः ॥अस्यप्रदानात्तृप्यंतुपित
रोऽपिपितामहाः ॥ गंधोदकतिलैर्मिश्रंसान्नंकुंभंफलान्वितं ॥ पितृभ्यःसंप्रदास्यामिअक्षय्यमुपतिष्ठत्विति
मंत्रेणदद्यात् ॥ युगादौससुद्रस्नानंमहाफलं वैशाखस्याधिमासत्वेयुगादिश्राद्धंमासद्वयेपिकार्यंयुगादिषूप

वासोमहाफलः ॥ युगादिमन्वादौरात्रिभोजनेअभिस्वधृष्टिमितिमंत्रजपः ॥ युगादिश्राद्धलोपजन्यप्रत्यवाय परिहारार्थमृग्विधानोक्तंप्रायश्चित्तंकरिष्येइतिसंकल्प्यनयसद्यावेत्यृचंशतवारंजपेत् ॥ अयंनिर्णयःसर्वयुगादौज्ञेयः ॥ इत्यक्षय्यतृतीयानिर्णयविधिःसमाप्तः ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

## ॥ १०८ ॥ ॥ अथ महालयश्राद्धसंकल्पविधिप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अथमहालयश्राद्धसंकल्पविधिप्रारंभः॥ तातांबात्रितयंसपत्नजननीमातामहादित्रयंसस्त्रीस्त्रीतनयादितातजननीस्वभ्रातरःसस्त्रियः ॥ तातांबात्मभगिन्यपत्यधवयुक्जायापितासद्गुरुःशिष्याप्ताःपितरोमहालयविधौतीर्थेतथातर्पणे ॥ आचम्यऊर्ध्वकेशी० ॥ अपसर्पंतु० ॥ अपक्रामंतु० ॥ सर्वेषामविरोधेनश्राद्धकर्मसमारभेत् ॥ ॐ पवित्रंते० ॥ पवित्रंधृत्वा ॥ प्राणानायम्य ॥ पितृदेवताभ्योनमः ॥ विष्णवेनमः ॥ ३ ॥ श्रीमद्भगवतो० पुण्यतिथौममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंधूरिलोचनसंज्ञकानांविश्वेषांदेवानां ॥ प्राचीनावीती ॥ अस्मत्पितृपितामहप्रपितामहानांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांमातृपितामहिप्रपितामहीनांअमुकदानांअमुकगोत्राणांवसुरुद्रादित्यस्वरूपाणांसापत्नमातुः अमुकदायाः अमुकगोत्रायाः वसुरूपायाः मातामहमातुः पितामहमातुःप्रपितामहानांअमुकशर्मणांवसुरुद्रादित्यस्वरूपाणां मातामहीमातुःपितामहीमातुःप्रपितामहीनांअमुकदानांअमुकगोत्राणांवसुरुद्रा

दित्यस्वरू पाणां पत्न्याः अमुकदायाःअमुकगोत्रायाः वसुरूपायाःपुत्रस्य अमुक॰ अमुकगोत्र॰ वसुरू
पस्यपितृव्यस्यअमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यमातुलस्यअमुकशर्मणःअमुक
गोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यभ्रातुः अमुक॰ अमुकगोत्रस्यसपत्नीकस्यसस॰ वसुरूपस्यपि
तृभगिन्याः अमुकदायाः अमुकगोत्रायाः सभर्तृकायाः ससुता॰ वसुरूपायाःमातृभगिन्याः अमुकदायाःअ
मुकगोत्रायाः सभर्तृकायाः ससुतायाः वसुरूपायाःआत्मभगिन्याः अमुकदायाःअमुकगोत्रायाःसभर्तृकायाः
ससुतायाःवसुरूपायाः श्वशुरस्यअमुकशर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यगुरोः अमुक
शर्मणः अमुकगोत्रस्यसपत्नीकस्यससुतस्यवसुरूपस्यशिष्यस्यअमुकशर्मणः अमुकगोत्रस्यवसुरूपस्य
एतेषांएतासांचश्रेयोर्थंतृप्त्यर्थंममपितुः कन्यागतेसवितरिसकृन्महालयापरपक्षिकश्राद्धंसदैवंसपिंडंसा
ग्नौकरणंपार्वणैकोद्दिष्टविधिनाअन्नेनहविषासद्यः करिष्ये॥अथवाममपितुः सकृन्महालयापरपक्षश्राद्धंब्रह्मार्प
णेनविधिनाअन्नेनहविषासद्यः करिष्यइतिवासंकल्पः ॥कुरुष्व ॥ तदंगआदौआत्मशुद्ध्यर्थंगृहशुद्ध्यर्थंभांड
भाजनशुद्ध्यर्थंप्रायश्चित्तार्थंवैश्वदेवसूक्तजाप्यमहंकरिष्ये ॥ तदंगयवोदकंतिलोदकंचकरिष्ये ॥ कुरुष्व ॥ ॥२१५॥
॥ इतिमहालयसंकल्पः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

तिगोपूजनंसमाप्तं॥अथब्राह्मणपूजा॥महाविष्णुस्वरूपिणेब्राह्मणायइदमासनंइदंपाद्यं ॥ चरणंपवित्रंवितंतंपु
राणं॥येनपूतःस्तरंतिदुष्कृतानि॥तेनपवित्रेणशुद्धेनपूताः॥अतिपाप्मानमरातिंतरेम॥ भूमिदेवाग्रजन्मासित्वंवि
 प्रपुरुषोत्तम ॥ प्रत्यक्षोयज्ञपुरुषोअर्घोयंप्रतिगृह्यतां॥इदंअर्घ्यंस ॰ अ ॰ गंधाःपांतु ॥ सौमंगल्यंचास्तु ॥अक्षताः
पांतुआयुष्यमस्तु॥पुष्पाणिपांतुसौश्रियमस्तु॥धूपंपातुदीपंपातुतांबूलंपातुदक्षिणाःपांतुऐश्वर्यमस्तु॥ नमोस्त्व
नंतायसहस्रमूर्तयेसहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्नेपुरुषायशाश्वते सहस्रकोटीयुगधारिणेनमः ॥
सकलाराधनैस्वर्चितमस्तु॥अस्तुसकलाराधनैस्वर्चितं ॥इति ब्राह्मणपूजनंसमाप्तं ॥ ॥ अथभोजनसंकल्प
प्रारंभः ॥ ॥गायत्रीमंत्रेणअंन्नप्रोक्षणंकार्यं॥ॐप्रजापतेनत्वदेतान्यन्योविश्वाजातानिपरिताबभूव ॥ यत्का
मास्तेजुहुमस्तन्नोअस्तुवयंस्यामपतयोरयीणां ॥ एकोविष्णुर्महद्भूतंपृथक्भूतान्यनेकशः ॥ त्रीन्लोकान्व्या
प्यभूतात्माभुंक्तेविश्वभुगव्ययः ॥ अनेनब्राह्मणभोजनेनश्रीआराध्यदेवताप्रीयतां ॥ छ ॥

॥ १९ ॥ ॥ अथ त्रिसुपर्णप्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ ॐ शांतिःशांतिःशांतिः ॥ ॐ ब्रह्ममेतुमां ॥ मधुमेतुमां ॥ ब्रह्ममेवमधुमेतुमां ॥
यास्तेसोमप्रजावत्सोभिसोअहं ॥ दुष्वप्नहंदुरुःषह ॥ यास्तेसोमप्राणास्तांजुहोमि ॥ त्रिसुपर्णमयाचि
तंब्राह्मणायदद्यात् ॥ ब्रह्महत्यांवाएतेघ्नंति येब्राह्मणास्त्रिसुपर्णपठांति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्

दितं ॥ गीर्भिर्वरुणसीमहि ॥ पराहिमेविमन्यवः पतंतिवस्यइष्टये ॥ वयोनवसतीरुप ॥ कदाक्षत्रश्रियंन मावरुणंकरामहे ॥ मृळीकायोरुचक्षसं ॥ १ ॥ तदित्समानमाशातेवेनंतानप्रयुच्छतः ॥ धृतव्रतायदाशुषे ॥ वेदायोवीनांपदमंतरिक्षेणपततां ॥ वेदनावःसमुद्रियः ॥ वेदमासोधृतव्रतोद्वादशप्रजावतः ॥ वेदायउपजायते ॥ वेदवातस्यवर्तनिमुरोर्ऋष्वस्यबृहतः ॥ वेदायेअध्यासते ॥ निषसादधृतव्रतोवरुणःपस्त्यास्वा ॥ साम्राज्यायसुक्रतुः ॥ यांसदासर्वभूतानीतिसमाप्तिपर्यंतंप्रातःकालवत्कुर्यात् ॥ ॥ इति सायं संध्या समाप्ता ॥ ॥ शुभंभवतु ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

## ॥ १८ ॥ ॥ अथ गोपूजन ब्राह्मणपूजन भोजनविधि प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ अद्यपूर्वोच्चरितएवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौममआत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थंश्रीरुद्ररूपिणीगोदेवताप्रीत्यर्थंयथाज्ञानेनयथामीलितोपचारैःपूजनमहंकरिष्ये ॥ गवामंगेषुतिष्ठंतिभुवनानिचतुर्दश ॥यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ श्रीरुद्ररूपिण्यैगवेनमः॥ध्या० श्रीरु० आ० आ० पा० अ० स्ना० व० अक्षतान्० चं० पु० धू० दी० ओदननैवेद्यंसमर्पयामि॥गवामंगेष्वितिमंत्रेणप्रदक्षणामंत्रपुष्पंसमर्पयामि आगावोइत्येकवर्गपठिला अनेनगोपूजनेनश्रीरुद्ररूपिणीगौः प्रीयतां॥ १

०ब्र० ति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिंपुनंति ॥ ॐ तस्यैवंविदुषोयज्ञस्यात्मायजमानःश्रद्धापत्नीशरी
रमिध्ममुरोवेदिर्लोमानिबर्हिर्वेदः शिखाहृदयंयूपःकामआज्यंमन्युः पशुस्तपोग्निर्दमःशमयितादक्षिणावाग्घो
२८॥ ताप्राणउद्गाताचक्षुरध्वर्युर्मनोब्रह्माश्रोत्रमग्नीद्यावद्ध्रियतेसादीक्षायदश्नातितद्धविर्यत्पिबतितदस्यसोमपानंय
द्रमतेतदुपसदोयत्संचरत्युपविशत्युत्तिष्ठतेचसप्रवर्ग्योयन्मुखंतदाहवनीयोयाव्याहृतिराहुतिर्यदस्यविज्ञानंत
ज्जुहोतियत्सायंप्रातरत्तितत्समिधंयत्प्रातर्मध्यंदिनं ॰ सायंचतानिसवनानियेअहोरात्रेतेदर्शपूर्णमासौयेर्धमासा
श्चमासाश्चतेचातुर्मास्यानियऋतवस्तेपशुबंधायेसंवत्सराश्चपरिवत्सराश्चतेहर्गणाःसर्ववेदसंवाएतत्सत्रंयन्म
रणंतदवभृथएतद्वैजरामर्यमग्निहोत्रं ॰ सत्रंयएवंविद्वानुदगयनेप्रमीयतेदेवानामेवमहिमानंगत्वादित्यस्यसायु
ज्यंगच्छत्यथयोदक्षिणेप्रमीयतेपितॄणामेवमहिमानंगत्वाचंद्रमसःसायुज्य ॰ सलोकतामाप्नोत्येतौवैसूर्याचं
द्रमसोर्महिमानौब्राह्मणोविद्वानभिजयतितस्माद्ब्रह्मणोमहिमानमाप्नोतितस्माद्ब्रह्मणोमहिमानं ॥ सहनाव
वतु ॥ सहनौभुनक्तु ॥ सहवीर्यंकरवावहै ॥ तेजस्विनावधीतमस्तुमाविद्विषावहै ॥ ॐ शांतिः शांतिः शांतिः ॥

॥ २० ॥ ॥ अथ परिवेषण प्रारंभः ॥

श्रीगणेशायनमः ॥ ॥ पात्रमध्येअन्नंवामेभक्ष्यभोज्यंदक्षिणेघृतपायसंपुरतःशाकादीन् ॥ एवंपरिवेषणं

क्तिपुनंति ॥ ॐ ब्रह्ममेधयां ॥ मधुमेधयां ॥ ब्रह्ममेवमधुमेधयां ॥ अद्यानोदेवसवितः प्रजावत्सावीः सौभगं ॥ परादुष्वप्निय ँ सुव ॥ विश्वानिदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रंतन्मआसुव ॥ मधुवाताऋतायते मधुक्षरंतिसिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ मधुनक्तमुतोषसिमधुमत्पार्थिव ँ रजः ॥ मधुद्यौरस्तुनः पिता ॥ मधुमान्नोवनस्पतिर्मधुमा ँ अस्तुसूर्यः ॥ माध्वीर्गावोभवंतुनः ॥ यइमंत्रिसुपर्णमयाचितंब्राह्मणायं दद्यात् ॥ भ्रूणहत्यांवाएतेघ्नंति ॥ येब्राह्मणास्त्रिसुपर्णपठंति ॥ तेसोमंप्राप्नुवंति ॥ आसहस्रात्पंक्तिपुनंति ॥ ॐ ब्रह्ममेधवा ॥ मधुमेधवां ॥ ब्रह्ममेवमधुमेधवां ॥ ब्रह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां ॥ श्येनोगृध्राणा ँ स्वधितिर्वनानां ँ सोमःपवित्रमत्येतिरेभन् ॥ ह ँ सःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् ॥ ऋचेत्वारुचेत्वा समित्स्रवंतिसरितोनधेनाः ॥ अंतर्हृदामनसापूयमानाः ॥ घृतस्यधाराअभिचाकशीमि ॥ हिरण्ययोवेतसोमध्यआसां ॥ तस्मिन्त्सुपर्णोमधुकृत्कुलायीभजन्नास्तेमधुदेवताभ्यः ॥ तस्यासतेहरयःसप्ततीरेस्वधांदुहाना अमृतस्यधारां ॥ यइदंत्रिसुपर्णमयाचितंब्राह्मणायदद्यात् ॥ वीरहत्यांवाएतेघ्नंति ॥ येब्राह्मणास्त्रिसुपर्णप...

त्रणप्रदक्षण॥मंत्रपुष्पतन...

